षड्यवाः पक्ष्मणो ज्ञेया यवमध्ये प्रकीर्तिताः।
मध्यात् पार्श्वे क्षयो ज्ञेयाश्चानुपूर्व्यात् क्षयो भवेत्।।

चतुर्यवास्त्वधरे प्रोक्ता वक्त्राच्चाप्यधिकाः स्मृताः।
सङ्ख्या तु पक्ष्मणो ज्ञेया अशीतिः परिनिश्चिताः।।

अक्ष्णोरथान्तरं ज्ञेयं त्रिमात्रं परिकीर्तितम्।
करवीरान्तरं तत्र यवहीनं त्रियङ्गुलम्।।

पञ्चमात्रं भवेद्दृष्ट्योरन्तरं परिकीर्तितम्।
आयामात् करवीरं तु अर्धोत्तरयवं स्मृतम्।।

## ४.१७.६ ध्रुवबेरस्य नेत्रमण्डलमानम्

**खि. १४ . ३६ - ३८**

यवमध्यं भवेद्दृष्टिः ज्योतिर्भागो यवस्य तु ।
कक्ष्यं पञ्चयवं प्रोक्तं श्वेतं तत्सुगुणं विदुः।।

पक्ष्मणो मण्डलं चादौ द्वितीयं श्वेतमण्डलम्।
तृतीयं मण्डलं कृष्णं चतुर्थं दृष्टिमण्डलम्।।

पञ्चमं तु भवेज्ज्योतिः विभागानयने स्मृतम्।

## ४.१७.७ ध्रुवबेरस्य दृष्टिमानम्

**खि. १४. ३८ - ४४**

दर्शने चक्षुषोर्भेदस्त्रिविधः परिकीर्तितः।।

अधश्चोर्ध्वं समं चेति चान्तरे बहवस्तथा।
ऊर्ध्वं सप्तयवाः प्रोक्ताः समे पञ्चयवाः स्मृताः।।

अधस्तात् त्रियवाः प्रोक्ताश्चान्ते भेदो न विद्यते।

रोषे भये च युक्ते तु प्रमाणं त्रियवं भवेत्।।

एकमात्रयवाधिक्यं सन्देहे नात्र विद्यते।
नेत्रमूलं भ्रुवोर्मूलमुत्सेधादर्धमङ्गुलम्।।

भ्रुवोर्मूलान्तरं ज्ञेयं मात्रार्धं तु प्रमाणतः।
भ्रुवोर्मध्यं तु विस्तारात् द्व्यर्धं यवमुदाहृतम्।।

पूर्वे चान्ते तनू स्यातामन्ते कौटिल्यमुच्यते।
अष्टाङ्गुलप्रमाणं तु भ्रुवः कृष्णं च गोलकम्।।

पूर्वे चान्ते तनू स्यातामन्ते कौटिल्यमुच्यते।
रोषे भयेऽपि चैकैकं भवेदर्धाङ्गुलोच्छ्रितम्।।

### ४.१७.८ ध्रुवबेरस्य नासामानम्

**खि. १४ . ४५ - ५२**

अध्यर्धद्व्यङ्गुलं प्रोक्तं विस्तारो नासिकापुटे।
ऊषेवं?तत्र नासाग्रं गोजीमूलप्रमाणकम्।।

अध्यर्धमङ्गुलं ज्ञेयमुत्तमं चाभिधीयते।
प्रमाणादधिकं तत्र नासाग्रं द्वियवं भवेत्।।

अग्रनासा दशयवा विस्तृता परिकीर्तिता।
विस्तारो मध्यनासाया यवाः सप्त प्रमाणतः।।

विस्तारस्य च मूलं तु त्रियवं समुदाहृतम्।
अङ्गुलं तु यवाधिक्यं पुटायामप्रमाणतः।।

पुटोत्सेधप्रमाणं तु यवहीनाङ्गुलं भवेत्।
द्व्यङ्गुलं तु पुटात् पार्श्वे निर्गता नासिका भवेत्।।

बाहुल्यं तु पुटं तत्र अर्धाधिकयवं भवेत्।
आयाममङ्गुलं स्रोतो विस्तारादर्धमङ्गुलम्।।

स्रोतोऽन्तरमथायामः षड्यवाः परिकीर्तिताः।
विस्तारो द्व्यङ्गुलं प्रोक्तस्त्वधः क्षिप्तं भवेत्ततः।।

तदधस्ताद्यवा गोजी आयामः सप्त उच्यते।

### ४.१७.९ ध्रुवबेरस्य ओष्ठमानम्

**खि. १४ . ५२ - ५९**

ऊर्ध्वं क्षिप्त्वा त्वधः स्थूला विस्तारात् द्वियवा भवेत्।।

अधस्तादुत्तरा पाली विस्ताराद्यव एव तु।
उत्सेधादुत्तरोष्ठस्य प्रमाणं द्वियवं भवेत्।।

उन्नतं गोजिपार्श्वे तु क्षिप्तं सृक्वाश्रितं ततः।
उत्तरोष्ठस्य संस्थानं पाली तस्याकृतिर्भवेत्।।

उद्गमं चोत्तरोष्ठस्य प्रमाणं चाङ्गुलं भवेत्।
अधरात् तस्य पाली च यवमित्यभिधीयते।।

तस्य वृत्तं भवेत् तिर्यक् गोलकार्धाङ्गुलान्वितम्।
निम्नमीषद्भवेन्मध्यं क्षिप्तं सृक्वाश्रितं ततः।।

रक्तभागमिति प्रोक्तं प्रवालसदृशं भवेत्।
उद्गमस्त्वधरोष्ठस्य अङ्गुलार्धाङ्गुलान्वितम्।।

भागे सिते च विज्ञेयं क्रमेण परिवर्जयेत्।
प्रमाणमधिकं ज्ञेयं षड्यवाः परिकीर्तिताः।।

निम्नमीषत्ततः सृक्वा श्मश्रुरेखाविभूषिता।

### ४.१७.१० ध्रुवबेरस्य दन्तमानम्

**खि. १४ . ५९ - ६४**

तिर्यक् चतुर्यवाः प्रोक्ता दन्ताः पञ्चोच्छ्रिताः पुरः।।

शेषाणामुपदन्तानां विस्तारः त्रियवं स्मृतम्।
चतुर्यवोच्छ्रयस्तेषां दंष्ट्रोत्सेधो यवाधिकः।।

विस्तारादधरा दन्ताः त्रियवाश्चतुरुच्छ्रयाः।
उत्सेधादधरा दंष्ट्राः यवैः समधिकाः स्मृताः।।

हानव्यास्त्रियवोत्सेधा विस्ताराद्वा चतुर्यवाः।
मध्ये दन्तस्थले ज्ञेया हानव्याश्च चतुर्यवाः।।

सप्ताङ्गुलपरीणाहं मानतो दन्तबन्धनम्।
अधरे दन्तमानं तु षडङ्गुलमिति स्मृतम्।।

शुद्धाः स्निग्धाः समाः शुक्लाः पूजिताश्च निरन्तराः।
द्वात्रिंशत् परिमाणेन अधरोत्तरयोः स्मृताः।।

### ४.१७.११ ध्रुवबेरस्य जिह्वादिमानम्

**खि. १४ . ६५ - ६६**

विस्तारात् त्र्यङ्गुला जिह्वा आयामाच्चतुरङ्गुला।
दन्तमूलं च तालुश्च जिह्वा रक्ताधरं तथा।।

ओष्ठादधस्ताच्चिबुकं विस्तारं द्वियवं भवेत्।

### ४.१७.१२ ध्रुवबेरस्य हनूमानम्

**खि. १४ . ६६ - ६८**

हनूत्सेधेऽङ्गुलं तत्र त्रियवादधिकं स्मृतम्।।

तिर्यक् त्रियङ्गुलं तस्य हनुपिण्डमिति स्मृतम्।
आयामानुगतं ज्ञेयं हन्वग्रात् सप्त चाङ्गुलम्।।

तिर्यग्घ्नयोस्तयोर्मध्ये अन्तरं द्व्यङ्गुलं भवेत्।

### ४.१७.१३ ध्रुवबेरस्य गलमानम्

**खि. १४ . ६८ - ६९**

अङ्गुलं गलवृत्तं च तस्य वृत्तं प्रशस्यते।।

अनिम्नं मांसलं वृत्तं मुखरेखाविभूषितम्।

### ४.१७.१४ ध्रुवबेरस्य मुखादिमानम्

**खि. १४. ६९ - ८७**

हनुश्च गलवृत्तं च गण्डशीरलवत् कृतम्(?)।।

ललाटं नासामूलं च ओष्ठस्तु त्रिकलः स्मृतः।
अपाङ्गमङ्गुलं ज्ञेयं विस्तारात् परिकीर्तितम्।।

अपाङ्गे कर्णमूलं तु अन्तरं तु द्विगोलकम्।
पञ्चाङ्गुला तथा रेखा कृष्णमूला ततो भवेत्।।

सभ्रूत्सेधसमः प्रोक्तः कर्णोत्सेधः प्रमाणतः।
विजूषावङ्गुलौ ज्ञेयौ विस्तारादर्धमङ्गुलम्।।

विजूषावर्तयोर्मध्ये विस्तारस्त्र्यङ्गुलं भवेत्।
पिप्पल्यावर्तयोर्मध्ये कर्णोत्सेधं द्विगोलकम्।।

अधस्तात् पिप्पली ज्ञेया आयामादङ्गुलं भवेत्।
निम्नमर्धाङ्गुलं ज्ञेयं कर्णमध्यप्रमाणतः।।

उत्सेधः त्र्यङ्गुलस्तस्य विस्तारादङ्गुलं भवेत्।
अर्धाङ्गुलं भवेत् स्रोतो विस्तारायामतस्ततः।।

पूर्वं नालस्य बाहुल्यं यवद्वयमुदाहृतम्।
अध्यर्धद्वियवं प्रोक्तमूर्ध्वावर्तप्रमाणतः।।

मध्यमं द्वियवं ज्ञेयं सर्वतः समुदाहृतम्।
बाहुल्यं तु ततः प्रोक्तमर्धाङ्गुलमिति स्मृतम्।।

पूर्वं नालस्य बाहुल्यं यवद्वयमुदाहृतम्।
विस्तारस्तस्य विज्ञेयमर्धाङ्गुलमिहोच्यते।।

बाहुल्यं तु यवं प्रोक्तं मध्यनालात्तु मानतः।
विस्तारस्तस्य विज्ञेयो यवाः पञ्च इति स्मृताः।।

पृष्ठनालस्य मानं तु ईषत् क्षिप्तं भवेत्ततः।
नाललम्बमिति प्रोक्तं भवेत्तस्य द्विगोलकम्।।

नालयोरन्तरं तत्र त्रियवोनाङ्गुलं विदुः।
अध्यर्धमङ्गुलं ज्ञेयं कर्णबन्धप्रमाणतः।।

अध्यर्धमङ्गुलं तस्य विस्तारः परिकीर्तितः।
उत्सेधात् कर्णबन्धे स्याद्वृत्तं चैवाङ्गुलं भवेत्।।

निर्गमान्मध्यकर्णं तु गूहादध्यर्धमङ्गुलम्।
षट्कलं तु भवेन्नाहमन्तरं कर्णपृष्ठयोः।।

कला कृकाटिका ज्ञेया ग्रीवापृष्ठं च सम्मतम्।
ककुदं त्र्यङ्गुलं प्रोक्तं ग्रीवाधस्तात्तु मानतः।।

हिक्कागलान्तयोर्मध्ये ग्रीवोत्सेधो द्विगोलकम्।
पञ्चविंशत्परीणाहमधिकार्धाङ्गुलान्वितम्।।

शिरोधरा भवेत्तत्र त्रिरेखापरिमण्डिता।
रेखाणामन्तरं तत्र अङ्गुलं त्रियवान्वितम्।।

हिक्का च द्व्यङ्गुला ज्ञेया विस्तारायामतस्ततः।

## ४.१७.१५ ध्रुवबेरस्य जत्रुहिक्कामानम्

### खि. १४ . ८७ , ८८

आयामाज्जतृणी ज्ञेये हिक्काधोष्टाङ्गुला स्मृता।।

अंसमध्यं तु हिक्कान्तं तिर्यक्सूत्रसमो भवेत्।

## ४.१७.१६ ध्रुवबेरस्य उरआदिमानम्

### खि. १४ . ८८ - ९६

उरो द्वियवविस्तारादंससन्ध्यन्तरं भवेत्।।

हिक्काहृदययोर्मध्ये उरः स्याद् द्वादशाङ्गुलम्।
उरोमध्यमिति ज्ञेयं हिक्काधस्तान्नवाङ्गुलम्।।

नाभीहृदययोर्मध्ये अन्तरं द्वादशाङ्गुलम्।
नाभेः स्यान्मेढ्रमूलस्य चान्तरं द्वादशाङ्गुलम्।।

उरोमध्यमिति ज्ञेयं हिक्काधस्तान्नवाङ्गुलम्।
द्वादशाङ्गुलविस्तीर्णमुरोमध्यं स्तनान्तरम्।।

तन्मध्ये तु च हिक्काया अन्तरं तु प्रमाणतः।
एकादशाङ्गुलं ज्ञेयमधिकार्धाङ्गुलान्वितम्।।

अध्यर्धमङ्गुलं ज्ञेयं स्तनमण्डलमानतः।
चूचुकस्य प्रमाणं स्यात् तन्मध्ये द्वियवान्तरम्।।

कक्षयोरन्तरं तिर्यगुरो द्वाविंशदङ्गुलम्।
उरसः स्तनपीठस्य कक्षान्तं द्वादशाङ्गुलम्।।

स्तनपार्श्वे तु विज्ञेयं स्तनपीठं त्रियङ्गुलम्।

हृदयेऽर्धं भवेत् क्रोडं निम्नमीषत् सुपूजितम्।।

उरः समुन्नतं वृत्तमुपदिग्धं सुपूजितम्।

### ४.१७.१७ ध्रुवबेरस्य अङ्गुलिमानम्

**खि. १४ . ९७ - १०३**

नवाङ्गुलं करतलं तिर्यक् पञ्चाङ्गुलं भवेत्।
मध्यमाङ्गुलमायामः पञ्चाङ्गुलमिहोच्यते।।

मध्यप्रदेशिनी रिक्ता भवेत्तस्य चतुर्यवम्।
मध्यादनामिका रिक्ता भवेत्तस्य चतुर्यवम्।।

अनामिका कनिष्ठा तु रिक्ता चाङ्गुलमेव च ।
अङ्गुष्ठस्य चतुर्मात्रमायामः परिकीर्तितः।।

अङ्गुष्ठस्य भवेत्तत्र क्षिप्तमङ्गुलपार्श्वतः।
अधः प्रदेशिनीमूलाद्विस्तारो द्वियवं भवेत्।।

प्रदेशिन्या मध्यमाया द्वयोर्मूलं समं भवेत्।
नीचैरनामिकाबन्धं मध्यमं द्वियवं भवेत्।।

नीचैरनामिकाबन्धात् कनिष्ठायाश्चतुर्यवम्।
तलपार्श्वे कनिष्ठाया मणिबन्धप्रमाणतः।।

पञ्चाङ्गुलं भवेत्तत्र आयामः परिकीर्तितः।

### ४.१७.१८ ध्रुवबेरस्य करतलमानम्

**खि. १४. १०३ - १०६**

शुकोदरस्य विस्तारस्तलमध्यं त्रियङ्गुलम्।।

द्व्यङ्गुलं तु भवेत् तिर्यक् तलपार्ष्णी शुकोदरौ।
द्व्यङ्गुलं तलमध्ये तु विस्तारायामतस्ततः।।

आयतं चोन्नतं वृत्तं हृदयं स्याद् द्वियङ्गुलम्(?)।
समद्विपर्व विज्ञेयं शिरस्तत्र नवाङ्गुलम्।।

बाहुमध्यपरीणाहो भवेदष्टादशाङ्गुलम्।

### ४.१७.१९ ध्रुवबेरस्य श्रोण्यादि मानम्

**खि. १४ . १०६ - १०८ , ११५**

श्रोणीबन्धो भवेत् स्फूर्तः अन्तरं द्वादशाङ्गुलम्।।

अष्टाङ्गुलमिति ज्ञेयं विस्तारायामतस्ततः।
उन्नतौ संहतौ चापि स्फिक्पिण्डौ च सुपूजितौ।।

ऊर्वोः स्यादन्तरं तिर्यक् सीवनी त्र्यङ्गुला स्मृता।

---------------------------------------

ऊर्ध्वमूला भवेच्छ्रोणी चोर्ध्वमष्टाङ्गुलं स्मृतम्।

### ४.१७.२० ध्रुवबेरस्य हस्तमानम्

**खि. १४ . १०८ - ११४**

अत ऊर्ध्वं प्रवक्ष्यामि हस्तमानं द्विजोत्तमाः।।

अंसग्रीवान्तरं तत्र स्कन्धायामो द्विगोलकः।
कूर्परस्यांससन्धेश्च अन्तरं तु प्रमाणतः।।

बाहुरायामतो ज्ञेयः एकादशकलो भवेत्।
तलकूर्परयोर्मध्ये प्रमाणं परिकीर्तितम्।।

ज्ञेयो नवकलायामः प्रकोष्ठः परिकीर्तितः।

उच्छ्रयो बाहुशिरसः सन्ध्योर्गोलकसंमितः।।

कक्षाद्बाहुशिरोमध्यमायामस्तु नवाङ्गुलम्।
बाहुमूलपरीणाहो भवेदष्टादशाङ्गुलम्।।

उच्छ्रयः पुष्कलो बाहुः पिचुकावंसपीठयोः।
नाहः प्रबाहुमूलस्य भवेत् पञ्चदशाङ्गुलम्।।

मणिबन्धस्य नाहः स्यात् समात्रार्धं दशाङ्गुलम्।
ततो वै बाहुसंस्थानं पुरस्तादीषदायतम्।।

### ४.१७.२१ ध्रुवबेरस्य कुक्षिमानम्

**खि. १४. ९६, ११५**

श्रोण्या अर्धं भवेत् कुक्षिः विस्तारो द्वादशाङ्गुलम्।।

------------------------------

नाभेरधो भवेत् कुक्षिरायामेनैव षट्कलः।

### ४.१७.२२ ध्रुवबेरस्य कटिमानम्

**खि. १४ . ११६ - ११७**

नाभेरधस्तात् कुक्षिः स्यात् कटिमध्यमिति स्मृतम्।।

कटीतटस्य विस्तारो भवेद्विंशतिरङ्गुलम्।
पूजिता तु कटी प्रोक्ता सुवृत्ता चायता शुभा।।

### ४.१७.२३ ध्रुवबेरस्य नाभ्यादिमानम्

**खि. १४ . ११८ - १२१**

नाभिरर्धाङ्गुलं निम्ना सर्वतः समुदाहृता।
नाभेरधो द्विमात्रं तु वस्त्रपर्यन्तमुच्यते।।

द्विकलोर्ध्वं भवेन्नाभेः स्तनमध्यमिति स्मृतम्।

तिर्यगष्टौ कला मध्ये त्रिगुणः परिणाहतः।।

वलीभ्यां सहिता ज्ञेया ताभ्यां रम्या कटी भवेत्।
निषण्णस्योदरायामो द्व्यङ्गुलं लुप्यते पुनः।।

आसनस्य प्रभेदाद्वा द्विचत्वारिंशदङ्गुलम्।
विस्तारो मेहनापीठं षडङ्गुलमिति स्मृतम्।।

### ४.१७.२४ ध्रुवबेरस्य मेढ्रमानम्

**खि. १४. १२२ - १२४**

मेढ्रं पञ्चाङ्गुलायाममुन्मानं स्यात् षडङ्गुलम्।
आयामात् कर्णिका ज्ञेया भवेदध्यर्धमङ्गुलम्।।

सप्ताङ्गुलपरीणाहस्तस्यैव परिकीर्तितः।
आयामेन भवेत् स्रोतश्चतुर्यवमिति स्मृतम्।।

एकमात्रं भवेदग्रमायामात् परिकीर्तितम्।

### ४.१७.२५ ध्रुवबेरस्य मुष्कमानम्

**खि. १४. १२४ - १२६**

मुष्कौ पञ्चाङ्गुलालम्बावधिकार्धाङ्गुलान्वितौ।।

अध्यर्धद्व्यङ्गुलोत्सेधौ विस्तारस्य फलं भवेत्।
संयतौ च सुवृत्तौ च आयतौ च सुपूजितौ।।

आयामात् सवनी ज्ञेया मुष्कसन्धिः द्विगोलकम्।

### ४.१७.२६ ध्रुवबेरस्य पायुमानम्

**खि. १४. १२६ ,१२७**

द्वियङ्गुलं भवेत् पायुः विस्तारायामतस्ततः।।

अष्टादशाङ्गुलं पश्चात् श्रोणीकक्षान्तरं भवेत्।
पुरतो बाहुमूलं स्यात् पृष्ठं तत्र दशाङ्गुलम्।।

### ४.१७.२७ ध्रुवबेरस्य पृष्ठमानम्

**खि. १४. १२८ - १३३**

पृष्ठमानं प्रवक्ष्यामि शृणुध्वं मुनिसत्तमाः।
ककुदश्रोणिमध्ये तु मध्ये वंश इति स्मृतम्।।

पञ्चादशकलायामो वंश इत्यभिधीयते।
विस्तारात् द्व्यङ्गुलं निम्नं मध्ये वंशस्य पूजितम्।।

कक्षयोरन्तरं तस्य चतुर्विंशाङ्गुलं भवेत्।
ककुदः पालिकाग्रं तु अन्तरं चतुरङ्गुलम्।।

त्रियश्राकृतिसंस्थाने फलके परिकीर्तिते।
अथांसफलके स्यातामायामेऽष्टाङ्गुले स्मृते।।

कक्षं तिर्यक् भवेत्तत्र अष्टाङ्गुलसमन्वितम्।
पृष्ठीफलकयोर्मध्ये तिर्यगष्टाङ्गुलं भवेत्।।

कक्षादूर्ध्वं भवेत्तस्य अङ्गुष्ठस्य समन्ततः।

### ४.१७.२८ ध्रुवबेरस्य अङ्गुल्यवयवमानम्

**खि.१४ . १३३ - १४६**

अङ्गुलीनां तु सर्वासां समं पर्वद्वयं भवेत्।।

अङ्गुलीनां तु चोन्मानं मूलमग्रं तथैव च ।
मध्यमाङ्गुलकोन्मानं यवाः सप्त त्रियङ्गुलम्।।

अग्रं तु द्व्यङ्गुलं प्रोक्तं यवैः पञ्चभिरन्वितम्।

षड्यवं तु नखायामं विस्तारेण चतुर्यवम्।।

नानाप्रदेशिनीं ज्ञेयं त्रिमात्रं षड्यवाधिकम्।
अग्रं द्वियङ्गुलं प्रोक्तं यवाधिकसमन्वितम्।।

नखायामः प्रदेशिन्या यवाः पञ्चेति च स्मृताः।
अनामिकाया उन्मानं त्रिमात्रं षड्यवाधिकम्।।

अग्रमानं भवेत्तत्र द्व्यङ्गुलं तु यवान्वितम्।
यवाः पञ्च नखायामः अध्यर्धं तु यवत्रयम्।।

कनिष्ठा त्र्यङ्गुला ज्ञेया नाहश्चतुर्यवान्वितः।
चतुर्यवो नखायामः विस्तारस्त्रियवं स्मृतम्।।

अङ्गुष्ठमूलमुन्मानं त्रिमात्रसप्तयवान्वितम्।
अग्रं द्विगोलकं ज्ञेयं समन्तात् परिकीर्तितम्।।

अङ्गुष्ठस्य नखायामो यवाः सप्त प्रकीर्तिताः।
विस्तारेण यवाः पञ्च सर्वतः समुदाहृताः।।

आनुपूर्व्यात् सुवृत्ताः स्युः अङ्गुल्यः श्लिष्टबन्धनाः।
नखाः सुतनुमात्राश्च मांसमग्नाः सुपूजिताः।।

आयामात् तलपृष्ठं तु द्विगोलकमिति स्मृतम्।
पृष्ठतोऽङ्गुलिपार्श्वेभ्यः पूर्वेभ्यस्तु पृथक् पृथक्।।

अग्रं द्विगोलकं ज्ञेयं समन्तात् परिकीर्तितम्।
त्रिभागोने भवेतां द्वे द्वे चाङ्गुल्यग्रपर्वणी।।

तलपार्श्वे भवेत् पार्ष्णी बाहुल्यात् त्र्यङ्गुली भवेत्।
मांसलं कूर्मपृष्ठं तु मध्ये निम्नं तलं शुभम्।।

स्पष्टाभिर्मृदुवर्णाभिर्लेखाभिश्चित्रितो भवेत्।
तनुताम्रैर्नखैः स्निग्धैः प्रदीर्घाः श्लिष्टसन्धयः।
यवसन्धानवृद्धिश्च प्रशस्ताङ्गुलयः स्मृताः।(?)।।

### ४.१७.२९ ध्रुवबेरस्य ऊरुमानम्

**खि. १४. १४७ - १४८**

ऊरुमूलमधो नाभेः दशाङ्गुलमिति स्मृतम्।।

जानुमध्यादधस्तात्तु सन्धेश्चैवोत्तरं भवेत्।
ऊरू आयामतो ज्ञेयौ कोलकानि त्रयोदश।।

### ४.१७.३० ध्रुवबेरस्य जङ्घामानम्

**खि. १४. १४९**

जानुमध्यस्य गुल्फस्य अन्तरं तु तयोस्ततः।
त्रयोदशकला ज्ञेया जङ्घाऽऽयामप्रमाणतः।।

### ४.१७.३१ ध्रुवबेरस्य जानुमानम्

**खि. १४ . १५० , १५१**

जङ्घोर्वोः सङ्गमो जानु मध्ये चैव प्रकीर्तितम्।
द्विकलं तत्र जानु स्याद्विस्तारोऽध्यर्धगोलकम्।।

प्रच्छन्नं चोन्नतं चेति जानु तत्र प्रशस्यते।

### ४.१७.३२ ध्रुवबेरस्य गुल्फमानम्

**खि. १४ . १५१ , १५२**

विस्तारो गोलकं गुल्फाद् गुल्फं वृत्तं प्रशस्यते।।

पुरस्तादुन्नतं चोरुरुत्कृष्टश्च भवेत्ततः।

### ४.१७.३३ ध्रुवबेरस्य ऊर्वादिपार्ष्णिपर्यन्तावयवानां मानम्

**खि. १४. १५२ - १५७**

सुश्लिष्टौ जानुगुल्फौ च ऊरू करिकरोपमौ।।

वृत्तौ चैवोन्नतौ पिण्डौ ऋजुसङ्गात् पुरस्ततः।
उन्मानादूरुमूलं तु षट्त्रिंशाङ्गुलमिष्यते।।

ऊरुमध्यस्य चोन्मानं कलाः पञ्चदश स्मृताः।
जान्वोरूर्ध्वपरीणाहः कला द्वादश कीर्तिताः।।

जानुमध्येऽपि चोन्मानं भवेदष्टादशाङ्गुलम्।
जङ्घापीठेऽपि चोन्मानं भवेदष्टादशाङ्गुलम्।।

गुल्फादूर्ध्वं भवेज्जङ्घा चोन्मानं तु दशाङ्गुलम्।
आयामात् तलसन्धिश्च पञ्चाङ्गुलमिहोच्यते।।

अक्षाधस्तात् तलोत्सेधः प्रमाणं चतुरङ्गुलम्।
अक्षात् पीठं भवेत् पार्ष्णिः द्विगोलकसमन्वितम्।।

### ४.१७.३४ ध्रुवबेरस्य अङ्गुलिबन्धमानम्

**खि. १४ . १५८ - १६१**

अक्षात् स्यादङ्गुलीबन्धस्तथा चाष्टाङ्गुलायतः।
अङ्गुष्ठः द्विकलायामः द्विपर्वसहितो भवेत्।।

अङ्गुलीनां तु विज्ञेयास्त्रिपर्वसहिता यदि।
तलपृष्ठं भवेत् तत्र पञ्चाङ्गुलसमुन्नतम्।।
अङ्गुष्ठमूलपर्यन्तमुत्सेधस्तु त्रियङ्गुलम्।
द्विपर्वणोर्भवेन्मध्यमुच्छ्रयो द्व्यङ्गुलं भवेत्।।

आयामस्तस्य विज्ञेयमङ्गुलं त्रियवाधिकम्।

**४.१७.३५ ध्रुवबेरस्य पादनखमानम्**

**खि.१४ . १६१, १६२**

अग्रपर्वान्नखान्मूलमङ्गुलं द्वियवाधिकम्।।

नखायाममिति प्रोक्तं यवाः पञ्च प्रमाणतः।
तिर्यक् सप्तयवायामं समं तत्र नखाः शुभाः।।

**४.१७.३६ ध्रुवबेरस्य पादाङ्गुष्ठमानम्**

**खि. १४ . १६३**

नखादग्रं भवेत् तत्र षड्यवाः परिकीर्तिताः।
अङ्गुष्ठमध्यमुन्मानं त्रियवं पञ्चाङ्गुलान्वितम्।।

**४.१७.३७ ध्रुवबेरस्य पादप्रदेशिनीमानम्**

**खि. १४ . १६४ - १६७**

आयामात् द्विकला ज्ञेया प्रदेशिनी त्रियवाधिका।
आयामान्मूलपर्यन्तं त्र्यङ्गुलं परिकीर्तितम्।।

तस्यैव मध्यमं पर्व अङ्गुलं परिचक्षते।
अग्रपर्वनखान्मूलमर्धाङ्गुलमिति स्मृतम्।।

आयामस्त्रियवं प्रोक्तं तिर्यक् पञ्चयवो नखः।
चतुर्यवोन्नतं तत्र प्रमाणं परिकीर्तितम्।।

अग्राङ्गुल्याश्च उन्मानं द्विकला त्रियवाधिका।
मध्यपर्वण उन्मानं द्व्यङ्गुलं त्रियवाधिकम्।।

## ४.१७.३८ ध्रुवबेरस्य पादमध्यमाङ्गुलिमानम्

### खि. १४ . १६८ - १७१

मध्यमाङ्गुलिकायामं द्विगोलकमिति स्मृतम्।
आयामान्मूलपर्यन्तं यवहीनं त्रियङ्गुलम्।।

मध्यपर्व भवेत् तस्य यवहीनं त्रियङ्गुलम्।
मध्यपर्वनखान्मूलमन्तरं च चतुर्यवम् ।।

नखादग्रं भवेत् तत्र त्रियवं समुदाहृतम्।
अग्राङ्गुल्यास्तथोन्मानं द्व्यङ्गुलं षड्यवाधिकम्।।

मध्यपर्वण उन्मानं त्र्यङ्गुलं समुदाहृतम्।

## ४.१७.३९ ध्रुवबेरस्य पादानामिकामानम्

### खि. १४ . १७१ - १७५

ज्ञेयस्त्वनामिकायामश्चाध्यर्धत्र्यङ्गुलं भवेत्।।

मूलपर्व भवेद्यत्तु यवहीनं त्रियङ्गुलम्।
मध्यपर्व भवेत् तस्य यवहीनाङ्गुलं तथा।।

अग्रपर्वान्नखान्मूलमध्यर्धद्वियवो नखः।
अध्यर्धद्वियवो ज्ञेयः नखस्तिर्यक् त्रयो यवाः।।

नखादग्रं भवेत् तस्य द्वियवं समुदाहृतम्।
अग्राङ्गुल्यास्तथोन्मानं द्व्यङ्गुलं द्वियवाधिकम्।।

मध्यपर्वण उन्मानं त्र्यङ्गुलं परिकीर्तितम्।
नाहो द्वियङ्गुलं मध्यं यवाः पञ्चाधिकान्विताः।।

### ४.१७.४० ध्रुवबेरस्य पादकनिष्ठिकामानम्

**खि. १४. १७६ - १८०**

आयामस्तु कनिष्ठस्य अध्यर्धं तु द्वियङ्गुलम्।
आयामान्मूलपर्वं तु प्रमाणादङ्गुलं भवेत्।।

अधिकार्धं भवेत् तस्य द्वियवं समुदाहृतम्।
अधिकार्धं यवाः पञ्च मध्यपर्वप्रमाणतः।।

अग्रपर्वनखान्मूलं त्रियवं समुदाहृतम्।
अध्यर्धद्वियवं तत्र आयामाद् द्वियवा नखाः।।

अधिकार्धयवं तत्र नखादग्रं प्रमाणतः।
अग्राङ्गुल्यास्तथोन्मानं द्व्यङ्गुलं द्वियवाधिकम्।।

मध्यपर्वण उन्मानं द्व्यङ्गुलं परिकीर्तितम्।

### ४.१७.४१ ध्रुवबेरस्य पादाङ्गुल्यन्तरमानम्

**खि. १४ . १८० - १८३**

प्रदेशिन्यङ्गुष्ठयोस्तिर्यगन्तरं तु चतुर्यवम्।।

अङ्गुष्ठात्तु प्रदेशिन्या आयामस्त्रियवो भवेत्।
चतुर्यवप्रदेशिन्या मध्यमाद्धानिरिष्यते ।।

षड्यवं मध्यमाद्धानिरनाम्न्यास्तु प्रकीर्तितः।
आनाम्न्याः कनिष्ठिकायास्तु अङ्गुलं तु प्रमाणतः।।

अनाम्न्या अङ्गुलं हानिः कनिष्ठा चोच्यते पुनः।
अङ्गुलीबन्धविस्तारः त्रिकलः समुदाहृतः।।

### ४.१७.४२ ध्रुवबेरस्य पार्ष्णिमानम्

**खि. १४ . १८४ - १८५**

अधस्ततः प्रमाणं तु पृथक् सर्वं ब्रवीमि वः।
पार्ष्णिः पञ्चाङ्गुलायामा विस्तारस्तावदेव तु।।

त्रितलोग्रतलस्तिर्यगायामश्चतुरङ्गुलः।

### ४.१७.४३ ध्रुवबेरस्य शिरोभागविन्यासक्रमः

**खि. १४ . १८५ - १९१**

मूर्धा चेत् पादयोर्मध्ये (?) निर्दिष्टश्च प्रमाणतः।।

अखिलं ब्रह्मणोद्दिष्टं प्रदेशं शृणुत द्विजाः।
शिरसो मध्ये तत्रैव बिन्दुं समुपलक्षयेत्।।

बिन्द्वग्रादप्युभौ पार्श्वौ बिन्दुपिण्डौ विशेषतः।
कपालस्य समुद्गौ च शिरः पृष्ठे विनिर्दिशेत्।।

बिन्द्वग्रात् पुरतश्चापि मूर्धा चेत्यभिधीयते।
पुरोगं मध्यकेशान्तं मूर्धा च पुरतो विदुः।।

पुरोगसन्धिर्विज्ञेयः पुरोगः प्रयतस्ततः।
कर्णयोरुपरिष्टात्तु कर्णशष्कुलिकौ स्मृतौ।।

केशान्तं मध्यकेशान्तमुक्षेपाद्वर्तते ततः।
तत्पार्श्वयोरुपक्षेपः कूर्चौ कर्णाश्रितौ विदुः।।

भ्रुवोरुपरि पार्श्वे तु ऋषीके तु विनिर्दिशेत्।
ऋषीकाभ्यन्तरं तिर्यक् ललाटमुपलक्षयेत्।।

**४.१७.४४ ध्रुवबेरस्य भ्रूसङ्गविन्यासक्रमः**

**खि. १४ . १९२**

तपनीमध्यमेऽधस्तात् भ्रूसङ्गमिति संस्थितम्।

**४.१७.४५ ध्रुवबेरस्य पक्ष्मविन्यासक्रमः**

**खि. १४ . १९२**

अक्षिप्रच्छादने त्वाहुः पक्ष्मणी चाधरोत्तरे।।

**४.१७.४६ ध्रुवबेरस्य भ्रूविन्यासक्रमः**

**खि. १४ . १९३**

पक्ष्मोपरि भवेत्तत्र भ्रुवस्तलमिति स्मृतम्।
भ्रुवोरग्रं च मध्यं च भ्रुवोः पुच्छं तथैव च ।।

**४.१७.४७ ध्रुवबेरस्य चक्षुर्विन्यासक्रमः**

**खि. १४ . १९४, १९५**

वर्म चाभ्यन्तरे ज्ञेयं पक्ष्म शुक्ले प्रमण्डलम्।
शुक्लमण्डलयोर्मध्ये ज्योतिर्मण्डलमिष्यते।।

अपाङ्गावधि चाक्ष्णोस्तु बाह्यतः परिकीर्तितम्।
प्रधावकरवीरौ च विज्ञेयावक्षिसंयुतौ।।

**४.१७.४८ ध्रुवबेरस्य नासाविन्यासक्रमः**

**खि. १४ . १९६**

नासाग्रं नासामूलं च नासामध्यं तथैव च ।
स्रोतः स्रोतोन्तरं चैव पार्श्वौ नासापुटौ विदुः।।

### ४.१७.४९ ध्रुवबेरस्य ओष्ठादिमुखावयवविन्यासक्रमः

**खि. १४ . १९७ - १९८**

उत्तरोष्ठं च गोजी च गोजीपार्श्वं तथैव च।
अधरोष्ठं च सृक्वं च उत्तरा पालिरेव च।।

अधस्ताच्चाधरौष्ठस्य चिबुकं परिकीर्तितम्।
अधस्ताच्चिबुकस्यापि हनुमध्यं विनिर्दिशेत्।।

### ४.१७.५० ध्रुवबेरस्य दन्तविन्यासक्रमः

**खि. १४ . १९९ - २०१**

पुरोदन्ताश्च चत्वारः चत्वारश्चाधरोत्तराः।
तेषां पार्श्वे च दंष्ट्राः स्युश्चतस्रोऽप्यधरोत्तराः।।

पार्श्वे चैवोपदंष्ट्राश्च ऊर्ध्वदन्तस्थलं स्मृतम्।
आभ्यन्तरस्तु दन्तानां भवेद्दन्तावरोपणम्।।

दन्तमूलं तु यो बन्धो विज्ञेयं दन्तबन्धनम्।

### ४.१७.५१ ध्रुवबेरस्य हनुबन्धविन्यासक्रमः

**खि. १४. २०१ , २०२**

हन्वग्रे मूलबन्धांश्च निर्विशेद्धनुबन्धनम्।।

जिह्वाग्रश्च पुरस्ताच्च जिह्वामूलनिबन्धनम्।
जिह्वामध्ये च पार्श्वे च कर्णनालनिबन्धनम्।।

### ४.१७.५२ ध्रुवबेरस्य ताल्ववयवविन्यासक्रमः

**खि. १४ . २०३**

ताल्वग्रं तालुमध्यं च तालुपार्श्वं च निर्दिशेत्।

### ४.१७.५३ ध्रुवबेरस्य कपोलावयवविन्यासक्रमः

**खि. १४ . २०३ -२०७**

आभ्यन्तरकपोलं च विज्ञेयाश्चौष्ठसन्धयः।।

सगदौ च गदाग्रौ च सन्धिदेशगतस्य च ।
कपोलौ चाग्रपादौ च कर्णमूलौ विनिर्दिशेत्।।

नेत्रपिण्डौ कपोलौ च गण्डपार्श्वे ततः परम्।
स्रोतसी मध्यकर्णौ च कर्णपिप्पलिके स्मृते।।

आवर्तौ तत्र विजुषौ उत्साधौ तत्र नालकौ।
पूर्वनालं च मध्यं च पृष्ठनालं ततः परम्।।

गूहात्तु कर्णपृष्ठौ च गूहं तत्र विनिर्दिशेत्।
ग्रीवाहन्वोस्तयोर्मध्ये निर्दिशेत् सगदान्तरम्।।

### ४.१७.५४ ध्रुवबेरस्य गलावयवविन्यासक्रमः

**खि. १४. २०८ , २०९**

तत्रैव तु गलं ज्ञेयं गलमन्तरमाश्रितम्।
स्कन्धौ हिक्कान्तरं चापि कर्णाविप्युपलक्षयेत्।।

पार्श्वयोः कर्णनालं तु मध्ये तत्र विनिर्दिशेत्।
ककुदं कृकटी चैव पृष्ठं ग्रीवा ततः परम्।।

### ४.१७.५५ ध्रुवबेरस्य जत्र्वाद्यवयवविन्यासक्रमः

**खि. १४ . २१० - २१३**

कण्ठाधस्तात् ततश्चापि जत्रुणी परिकीर्तिते।
जत्रुमध्यं भवेत् तत्र हिक्कापार्श्वं ततः परम्।।

हिक्काधस्तात् ततश्चापि वक्षोमध्यं विनिर्दिशेत्।
ककुदौ च निसन्धौ च ग्रीवायां पार्श्वतो मतौ।।

ककुदात् पार्श्वयोश्चापि जत्रुसन्धिः प्रकीर्तितः।
अधस्तादंसमध्यं तु कक्षसूत्रादधो भवेत्।।

ततः कक्षसुपार्श्वं तु कक्षं समुपलक्षयेत्।

**४.१७.५६ ध्रुवबेरस्य क्रोडादिविन्यासक्रमः**

**खि. १४. २१३, २१४**

वक्षोमध्यादधस्तात्तु क्रोडं सम्यगुदाहृतम्।।

उरोमध्यस्य पार्श्वे तु स्तनपीठं विनिर्दिशेत्।
स्तनपीठस्य पार्श्वे तु स्तनपिण्डौ च चूचुकौ।।

**४.१७.५७ ध्रुवबेरस्य हृदयादिविन्यासक्रमः**

**खि. १४. २१५, २१६**

क्रोडनाभ्यन्तरं चापि हृदयं तु विदुर्बुधाः।
तनुमध्यं च पार्श्वे च नाभेरुपरि निर्दिशेत्।।

नाभिपार्श्वे भवेत् कुक्षिकोष्ठं समुपलक्षयेत्।

**४.१७.५८ ध्रुवबेरस्य गुह्यपायुविन्यासक्रमः**

**खि. १४. २१६ - २१८**

तथैव मेहनापीठं मेहनासन्धिरेव च।।

स्रोतश्च कणिकश्चैव मेहनानि विनिर्दिशेत्।
श्रोण्यग्रे च कटीमध्ये कटिपार्श्वे ततः परम्।।

मुष्कौ च मुष्कबन्धौ च मुष्कान्तरमथोच्यते।

पायुश्च सीवनी चैव मुष्कबन्धादथोच्यते।।

### ४.१७.५९ ध्रुवबेरस्य पृष्ठवंशाद्यवयवविन्यासक्रमः

**खि. १४ . २१९ - २२२**

ततः परं पृष्ठवंशं फलकादन्तरं भवेत्।
अथांसफलके मूलमध्यमग्रं तथैव च ।।

ककुन्दरौ कटीसन्धौ स्फिक्पिण्डौ चान्तरं भवेत्।
उभयोः पिण्डयोर्मध्ये पिण्डपार्श्वं ततः परम्।।

स्फिक्पिण्डयोरधस्तात्तु पिण्डसन्धिं विनिर्दिशेत्।
ततः प्रभायाः पीठं च नखं नखशिखा भवेत्।।

प्रदेशिनी चाग्रमूलं पृष्ठं समुपकल्पयेत्।

### ४.१७.६० ध्रुवबेरस्य कूर्परविन्यासक्रमः

**खि. १४. २२२ , २२३**

कूर्परस्य बहिः सन्धिं कौर्परार्धं विनिर्दिशेत्।।

पुरस्तान्मणिबन्धं च नखाग्रं परिकीर्तितम्।
तलपार्श्वे तलसन्धिं तलपृष्ठं विनिर्दिशेत्।।

### ४.१७.६१ ध्रुवबेरस्य बाहुविन्यासक्रमः

**खि. १४. २२४ - २२६**

बाह्वोरुपरि विज्ञेयं समपीठं समुन्नतम्।
बाह्वोरभ्यन्तरं ज्ञेयं बाहुपिण्डमिति स्मृतम्।।

बाहुपृष्ठं च पार्श्वं च कक्षपृष्ठं ततः परम्।
बाह्वोरधस्तात् कक्षं च बाहुसन्धिं विनिर्दिशेत्।।

ततः प्रभायां वंशस्य पृष्ठं समुपलक्षयेत्।
कूर्परस्य बहिः सन्धी कौर्पराणि विनिर्दिशेत्।।

### ४.१७.६२ ध्रुवबेरस्य हस्तावयवविन्यासक्रमः

**खि. १४ . २२७ - २३३**

[1]पुरस्तान्मणिबन्धं च नखाग्रं परिकीर्तितम्।
तलपार्श्वे तलसन्धी तलपृष्ठं विनिर्दिशेत्।।

तलमध्यश्च पार्ष्णी च अङ्गुष्ठानि शुकोदरम्।
क्षिप्रमङ्गुष्ठपार्श्वं तु हृदयं तललेखतः।।
अङ्गुष्ठाग्रं च मूलं च नखं नखशिखा भवेत्।
प्रदेशिनी चाग्रमूलमग्रं पर्व ततः परम्।।

नखं नखशिखा चैव पृष्ठं पर्व ततो भवेत्।
मध्यमाङ्गुलिपर्वं तु(?) अग्रं मध्यं विनिर्दिशेत्।।

अनामिकाया अग्रं तु मूलमग्रं विनिर्दिशेत्।
नखं नखशिखा चैव पृष्ठं पर्व ततः परम्।।

कनिष्ठामध्यमं मूलमग्रं पर्व ततः परम्।
नखं नखशिखा चैव पृष्ठपार्श्वे ततो भवेत्।।

तललेखायतां चैव लक्षयेदङ्गुलिं ततः।

---

1 कूर्परस्य पुरस्तात्।

### ४.१७.६३ ध्रुवबेरस्य ऊर्वंवयवानां विन्यासक्रमः

**खि. १४ . २३३ - २३६**

आभ्यन्तरनिबद्धं तु ऊरुमूलं विनिर्दिशेत्।।

परुषं चोरुमूलार्धमूरुसन्धिं विनिर्दिशेत्।
नाभ्यन्तरोरुमूलाधः पाण्डुपिण्डौ च लक्षयेत्।।

पाण्डुपिण्डौ पुरस्तात्तु ऊरुं समुपलक्षयेत्।
ऊरुमध्यात्तु पृष्ठं तु शङ्कुलीत्यभिधीयते।।

वक्त्रसन्धिर्भवेत् पार्श्वे ऊरुं समुपलक्षयेत्।
ऊरुमध्यादधस्तात्तु ऊर्वोरग्रं विनिर्दिशेत्।।

### ४.१७.६४ ध्रुवबेरस्य जान्ववयवानां विन्यासक्रमः

**खि.१४. २३७, २३८**

अग्रादधस्ततश्चापि जानुनी परिकीर्तिते।
जानुमध्यं च पार्श्वे च ज्ञेये जानुकपालिके।।

जघनं जानुसन्धेस्तु पृष्ठतश्च विनिर्दिशेत्।

### ४.१७.६५ ध्रुवबेरस्य जङ्घास्थानविन्यासक्रमः

**खि. १४. २३८ - २४०**

जान्वधस्तात् ततश्चापि जङ्घे समुपलक्षिते।।

पृष्ठसन्धेरधस्तात्तु जङ्घापिण्डे विनिर्दिशेत्।
जङ्घापिण्डे तु पार्श्वे तु इषीके परिकीर्तिते।।

पिण्डाधस्तात् ततश्चापि ज्ञेयं पार्ष्णिशिरस्ततः।
जङ्घाधस्तात्ततश्चापि जङ्घामूलं विनिर्दिशेत्।।

### ४.१७.६६ ध्रुवबेरस्य पार्ष्ण्याद्यवयवानां विन्यासक्रमः

**खि. १४. २४१ - २४४**

पार्ष्णिसन्धिस्ततोऽधस्तात् पार्ष्णिशीर्षं तथोच्यते।
तलसन्धेस्तु पार्श्वे तु तलाक्षं परिकीर्तितम्।।

सन्ध्योरन्तरतो ज्ञेयं तलकूर्चमिति स्मृतम्।
तलपृष्ठं ततो ज्ञेयं प्रपदं परिकीर्तितम्।।

मण्डलस्य तु विज्ञेयं मध्यमं तस्य तस्य तु।
पुरतस्तलमध्यस्य हृदयं परिकीर्तितम्।।
पार्ष्णिमध्यं ततो विद्यात्-----------।

### ४.१७.६७ ध्रुवबेरस्य पादाङ्गुलीनां विन्यासक्रमः

**खि. १४. २४४ -२४८**

-----------------अङ्गुष्ठं हृदयं ततः।
अङ्गुष्ठाग्रं च मूलं च नखं नखशिखा भवेत्।।

पुरतस्तलमध्ये स्याद्धृदयं परिकीर्तितम्।
प्रदेशिनीमध्यमग्रं नखं नखशिखां विदुः।।

मध्यमा मध्यमाग्रं च नखं नखशिखा तथा।
अनामिकाग्रमध्यं च नखं नखशिखा तथा।।

कनिष्ठमग्रं मध्यं च नखं नखशिखा तथा।।
प्रदेशिन्यङ्गुष्ठयोर्मध्ये शङ्कुलीत्यभिधीयते।।

स्थावरा चेति विज्ञेयं दशाङ्गुल्यन्तरं ततः।
रक्तं सम्यक् प्रदेशानां विभागात् तत्र तद्भवः।।

### ४.१७.६८ ध्रुवबेरावयवानां सङ्ख्या

**खि. १४. २४९**

प्रदेशः सङ्ग्रहात् ज्ञेयः चतुःशतं त्रिसप्ततिः।
व्याख्यातमानुपूर्व्येण विज्ञेयं शास्त्रकोविदैः।।

### ४.१७.६९ ध्रुवबेरावयवानां दशतालानुरोधेन मानोन्मानप्रमाणानि

**स. २३ . ८ - ८५**

मेढ्रमूलं त्रिमात्रं स्यात् मेढ्रं पञ्चाङ्गुलं भवेत्।।

अण्डायामं चतुर्मात्रं मेढ्रान्तं लम्बितं भवेत्।
अक्षात् पादतलायामं द्वादशाङ्गुलमिष्यते।।

अक्षान्तात् पार्ष्णिकायामं द्व्यङ्गुलं च यवाधिकम्।
पादाङ्गुष्ठं चतुर्मात्रं तद्यवाधिकमायतम्।।

प्रदेशिन्यास्तथायामं त्रिमात्रं मध्यमाङ्गुलम्।
त्र्यङ्गुलाऽनामिका प्रोक्ता द्विमात्रार्धा कनिष्ठिका।।

पादाङ्गुल्यायतं प्रोक्तं तलं पञ्चाङ्गुलोन्नतम्।
अङ्गुष्ठमूलात् पार्ष्ण्यन्तं तलायामं त्रयोदश।।

कनिष्ठाङ्गुलमूलात्तु पार्ष्ण्यन्तं पञ्चगोलकम्।
हिक्कासूत्रादधो बाहुः सप्तविंशाङ्गुलायतः।।

एकविंशाङ्गुलायामः प्रकोष्ठः समुदाहृतः।
सप्ताङ्गुलतलायामं षडर्धं मध्यमाङ्गुलम्।।

षण्मात्रा द्वियवाधिक्या तर्जनी वाप्यनामिका।
अङ्गुष्ठदैर्घ्यं षण्मात्रं कनिष्ठायास्तथा भवेत्।।

सार्धरुद्राङ्गुलं तारं वदनस्य विधीयते।
कर्णयोरन्तरं यत्तच्छिरोविस्तार उच्यते।।

उष्णीषात् त्रिगुणार्धं तु प्रमाणं विस्तृतं भवेत्।
उष्णीषान्मध्यकेशान्तः सार्धसप्ताङ्गुलायतः।।

उष्णीषात् पार्श्वकेशान्तो दशमात्रायतो भवेत्।
उष्णीषात् पृष्ठकेशान्तः सार्धा मात्रास्त्रयोदश।।

कर्णाभ्यां तु पुरोवक्त्रमेकविंशतिकाङ्गुलम्।
केशान्ताच्च भ्रुवोर्मध्यं द्व्यङ्गुलं द्वियवाधिकम्।।

भ्रूदैर्घ्यं पञ्चमात्रार्धं भ्रूवक्रं चैकमात्रकम्।
यवद्वयं भ्रुवोर्मध्यं यवार्धं तारमग्रयोः ।।

मात्रैकं द्वियवं तारो भ्रूसङ्गम उदीरितः।
दृशोरन्तरगं तारं यवाध्यर्धं द्विकाङ्गुलम्।।

यवाध्यर्धः कलायामो नेत्राभ्यां समुदाहृतः।
यवः कनीनिकायामः तावत्येव च विस्तृतिः।।

एकादशयवायामः शुक्लभाग इति स्मृतः।
मध्यनेत्रप्रमाणं स्याद्यवाः सप्त प्रकीर्तिताः।।

सार्धपञ्चयवं कृष्णं ज्योतिर्मण्डलगं यवम्।
दृष्टिमध्ये यवाष्टांशः सजीवज्योतिरेव तत्।।

नीलाञ्जनसमाभासा नवतिः पक्ष्मरोमकाः।
सङ्गमस्तु पुटात् पार्श्वे कृत्वा त्रिनासिकायतः।।

मूलमध्याग्रनासाश्च त्वर्धमेकं द्विमात्रकम्।

यवाधिकाग्रनासा स्यात् पुट एकाङ्गुलः स्मृतः।।

गोजी च नासिकोत्सेधो द्व्यङ्गुलः समुदाहृतः।
षड्यवं तं तमा(वान्तरमा?)ख्यातः पुटयोः सुषिरद्वये।।

पुटाभ्यां पुष्करा ज्ञेया सुषिरद्वयमुच्यते।
गोजी चतुर्यवार्धा स्यात् उत्तरोष्ठस्तथा भवेत्।।

अधरोष्ठो यवाष्टार्धमास्यं भागार्धमात्रकम्।
द्विमात्रतारो ह्यधरस्त्रियवोत्तरपालिका।।

अधरान्तं यवाध्यर्धं द्व्यङ्गुलं चिबुकं तथा।
द्वियवार्धं हनोश्चक्रं क्रमाद्युक्त्या तु कारयेत्।।

चिबुकग्रीवयोर्मध्यं भागो वक्त्रं तथोन्नतम्।
आपूर्णचन्द्रवद्वक्त्रं हनुकेशान्तभासुरम्।।

भ्रूसूत्रादास्यसूत्रान्तः कर्णायामः प्रशस्यते।
नेत्रसूत्रान्तरं कुर्यात् कर्णयोः सुषिरं यथा।।

अपाङ्गात् कर्णसुषिरं सार्धं सप्ताङ्गुलं भवेत्।
द्व्यङ्गुलः कर्णविस्तारः चतुर्मात्रार्धमायतिः ।।

नालायामस्तथा प्रोक्त आकारः कर्त्रिकाकृतिः।
नालमर्धाङ्गुलं मानं कुण्डलाधारमङ्गुलम्।।

कर्णनालोर्ध्वपिप्पल्या यवद्वयनतं भवेत्।
अधस्तात् पूर्वनालः स्यात् यवपञ्चप्रमाणतः।।

नालयोस्तु परीणाहो यवाः सप्त प्रकीर्तिताः।
अष्टषड्यवमूलं तु तत्पूर्वापरनालयोः।।

श्रोत्रनालान्तरं तारं प्रोक्तमध्यर्धमात्रतः।
श्रोत्रद्वारस्य चायाम अर्धमात्रस्तथायतम्।।

कर्णाकारं च कर्णाभं कुर्याद्युक्तिविशेषतः।
ग्रीवा नवाङ्गुलतता मूलेऽत्यर्धाङ्गुलाधिका।।

चत्वारिंशच्च मात्रार्धं बाहुपर्यन्तविस्तृतिः।
दशाङ्गुलं कक्षमानं बाहुतारो नवाङ्गुलः।।

कक्षान्तरप्रमाणं स्यात् त्रयोविंशतिकाङ्गुलम्।
ग्रीवायाः कक्षसन्धिश्च नवमात्रप्रमाणतः।।

हिक्कासूत्रोर्ध्वतो मानं द्व्यङ्गुलं चांसदेशतः।
कूर्परस्य प्रमाणं तु सप्ताङ्गुलमुदाहृतम्।।

षण्मात्रार्धं प्रकोष्ठाभ्यां प्रमाणं तत्र चोच्यते।
प्रमाणं मणिबन्धस्य त्रिमात्रं षड्यवाधिकम्।।

पाणेस्तलप्रमाणं स्यात् पञ्चमात्रं यवद्वयम्।
तलमूलं तु बहलं त्रिमात्रं चार्धमात्रकम्।।

द्व्यङ्गुलार्धं मध्यमं स्यात् द्व्यङ्गुलं चाग्रबाहलम्।
अङ्गुलात् षड्यवाधिक्यं कराङ्गुष्ठप्रमाणतः।।

मात्रं चतुर्यवाधिक्यं मध्यमाङ्गुलिविस्तरम्।
अनामिकातर्जनीभ्यां विस्तारं द्व्यङ्गुलं भवेत्।।

यवैकसहितं मात्रं कनिष्ठामूलविस्तरः।
तन्मूलादग्रविस्तारः द्वियवं हीनमिष्यते।।

अङ्गुष्ठस्य नखायामश्चाङ्गुलद्वियवाधिकः।

तारश्चाष्टयवः प्रोक्तो बाहलं तु चतुर्यवम्।।

मध्याङ्गुलिनखायामश्चाङ्गुलस्तु विधीयते।
षड्यवस्तस्य विस्तारः पूर्वमात्रं तु बाहलम्।।

अनामिकाप्रदेशिन्योर्नखायामस्तु षड्यवः।
चतुर्यवस्तयोस्तारो घनं यूकमुदाहृतम्।।

कनिष्ठिकानखायामं यवपञ्चकमीरितम्।
त्रियवार्धं च विस्तारो यूकं तद्बाहलं भवेत्।।

अङ्गुलाग्रनखायामो यवः सार्ध उदाहृतः।
अङ्गुष्ठं तु द्विपर्व स्याच्छेषाङ्गुल्यस्त्रिपर्वकाः।।

त्रिलेखं च तलं प्रोक्तमङ्गुलीनां क्रमात्तथा।
हिक्कास्तनान्तरं तिर्यक्प्रमाणं द्व्यङ्गुलार्धकम्।।

मध्योदरप्रमाणं तु दशसप्ताङ्गुलं मतम्।
स्तनात् स्तनान्तरं तारं सार्धत्रयोदशाङ्गुलम्।।

स्तनपिण्डाभ्यन्तरं तत्सप्तकाङ्गुलिमानकम्।
मध्योदरप्रमाणं तु यवाध्यर्धं तु चूचुकम्।।

स्तनस्य मण्डलं बाह्यं सार्धद्व्यङ्गुलमानकम्।
मध्योदरप्रमाणं तु दशसप्ताङ्गुलं ततः।।

श्रोणिप्रमाणं विज्ञेयं सार्धमष्टादशाङ्गुलम्।
सुपूर्णं चोदरं कुर्याच्छ्रोणी द्व्यर्धाङ्गुलोन्नता।।

कट्याः श्रोण्युन्नतं मात्रं श्रोणीतारोऽष्टमात्रकः।
कटिदेशप्रमाणं तु एकविंशतिकाङ्गुलम्।।

मेढ्रमूलप्रदेशस्य प्रमाणं द्वादशाङ्गुलम्।
ऊरुमूलप्रमाणं स्यादर्धोपेतत्रयोदश।।

ऊरुमध्यमविस्तारश्चाङ्गुलानि त्रयोदश।
चतुर्यवं नवाङ्गुल्या ऊर्वोरग्रं प्रमाणतः।।

जानुमध्यमविस्तारो नवमात्रं सषड्यवम्।
जङ्घामूलोऽष्टमात्रार्धो जङ्घामध्यं नवाङ्गुलम्।।

वेदाङ्गुलाधिकं मानं नलिकायाः प्रमाणतः।
तयोरक्षान्तरं तिर्यग्द्वयं पञ्चकमात्रकम्।।

चतुरङ्गुलविस्तारः पार्ष्णिकायाः प्रमाणतः।
अक्षपार्ष्ण्यग्रयोर्मध्ये त्रिमात्रार्धं प्रमाणतः।।

पुरस्तादग्रविस्तारः सप्ताङ्गुलमुदाहृतम्।
अग्रोन्नतं त्रिमात्रं तु द्विमात्रं पृष्ठमुन्नतम्।।

पादाङ्गुष्ठस्य विस्तारो द्विमात्रं द्वियवाधिकम्।
सार्धमात्रो नखायामो नखतारो यवाङ्गुलः।।

द्विमात्रो मध्यमाङ्गुष्ठः कार्यः सर्पशिरो यथा।
प्रदेशिनीप्रमाणं तद्भवेदध्यर्धमङ्गुलम्।।

नखायामो दशयवस्तारः सप्तयवो भवेत्।
मध्यमाङ्गुलिविस्तारो मात्रकं द्वियवाधिकम्।।

अङ्गुलं तन्नखायामः षड्यवस्तस्य विस्तरः।
अङ्गुलं तर्जनीतारं नखायामस्तु षड्यवः।।

तारश्चतुर्यवस्तस्यानामिकायास्तथेरितः।
कनिष्ठाङ्गुलिविस्तारो यवाः सप्त ह्युदाहृताः।।

चतुर्यवार्धश्च नखो त्रियवो विस्तरस्तथा।
पादस्य नखबाहल्यं यवाध्यर्धं क्रमाद्भवेत्।।

शेषाङ्गुल्यस्त्रिपर्वाः स्युः पादाङ्गुष्ठं द्विपर्वकम्।
षाष्ण्र्युन्नतं त्रिमात्रं च शेषं युक्त्या तु कारयेत्।।

स्कन्धादाकटिमूलान्तं मानं षट्त्रिंशदङ्गुलम्।
पृष्ठस्य पक्षवैशाल्यं द्वाविंशत्यङ्गुलं मतम्।।

वंशस्तत्कक्षसन्धी च कुर्यादुक्तक्रमाद् बुधः।
कक्षपार्श्वस्य विस्तारं मतमेकादशाङ्गुलम्।।

स्तनपार्श्वस्य विस्तारः सार्धषोडशमात्रकः।
कुक्षिपार्श्वस्य विस्तारः सार्धं पञ्चदशाङ्गुलम्।।

सार्धं पञ्चाङ्गुलं स्फिकमुन्नतं चतुरङ्गुलम्।
द्व्यङ्गुलं द्वियवोपेतं मस्तकस्यैकविस्तरम्।।

द्विमात्रं द्वियवोपेतं मेढ्रतारमुदाहृतम्।
शिरसः परिणाहः स्यात् सप्तत्रिंशत्तथाङ्गुलम्।।

ग्रीवायाः परिणाहः स्यात् सार्धं वेदोष्णिकाङ्गुलम्।
द्वाभ्यां कक्षान्तनाहः स्यात् पुष्टिश्चाष्टाङ्गुलं परम्।।

चत्वारिंशाष्टकाङ्गुल्यो मध्यमोदरनाहतः।
षड्यवं विस्तृतं गाढं नतं नाभिप्रदक्षिणम्।।

पञ्चाधिकं तु पञ्चाशच्छ्रोणिनाह उदाहृतः।

कटिप्रदेशतो नाहः साष्टपञ्चाशदङ्गुलम्।।

मेढ्रमूलप्रदेशे तु नाहं युक्त्या तु कारयेत्।
चत्वारिंशद्द्विकं मात्रमूरुमूले तु नाहतः ।।
(वेदपङ्क्त्यङ्गुलं प्रोक्तमूरुमूले तु नाहतः)।
ऊरोरग्रे तु नाहः स्यादेकोनत्रिंशदङ्गुलम्।।

जानुमध्यमनाहस्तु सार्धैकत्रिंशदङ्गुलम्।
जङ्घाया मूलनाहः स्यात् सार्धं षड्विंशदङ्गुलम्।।

जङ्घामध्यगतो नाह एकोनत्रिंशदङ्गुलम्।
चतुर्दशाङ्गुलं सार्धं नालिकादेशमानकम्।।

एकत्रिंशच्च मात्राणां बाहुमूलस्य नाहकः।
कूर्परस्य परीणाहः सार्धद्वात्रिंशदङ्गुलम्।।

नाहः प्रकोष्ठदेशस्य एकविंशत्समाङ्गुलः।
मणिबन्धस्य नाहस्तु षोडशाङ्गुल उच्यते।।

देहः स्वाभाविकस्तद्वत् क्रियते चित्रवित्तमैः।
दशतालमिदं प्रोक्तं मानोन्मानप्रमाणतः।।

## ४.१७.७० ध्रुवबेरकल्पने उत्तमदशतालानुसारं ध्रुवबेरस्य प्रमाणम्

**वि. २३. १६१ - १६९**

अथ प्रमाणं वक्ष्ये -

उष्णीषात् पूर्वकेशान्तं नवाङ्गुलं, पार्श्वयोस्तत्समं पृष्ठकेशान्तं द्वादशाङ्गुलं, मुखस्य विस्तारं चतुर्दशाङ्गुलं, द्विचत्वारिंशदङ्गुलनाहं शिरसः पृष्ठतः कर्णयोरन्तरं त्रयोदशाङ्गुलं पूर्ववत् पृष्ठतः षड्विंशत्यङ्गुलं, शेषं कर्णयोः

स्थानं भ्रुवोर्मध्यमेकाङ्गुलं, केशान्ताद्भ्रुवोर्मध्यं त्र्यङ्गुलम्, अष्टाङ्गुलार्धं तिर्यगुपक्षेपमध्यम् अष्टार्धाङ्गुलं, ग्रीवाग्रविस्तारं नवार्धाङ्गुलं, ग्रीवामूलविस्तारं बाह्वोः पर्यन्तं चतुश्चत्वारिंशदङ्गुलं,वक्षोविशालं चतुर्विंशत्यङ्गुलं, हृदयविस्तारं विंशत्यङ्गुलं, स्तनयोरन्तरं चतुर्दशाङ्गुलं, मध्योदरं षोडशाङ्गुलं, श्रोणीविस्तारम् अष्टादशाङ्गुलं, कटिविशालं विंशत्यङ्गुलम्, ऊरुमूलविशालं त्रियवाधिकत्रयोदशाङ्गुलम्, ऊरुमध्यविस्तारमेकादशाङ्गुलं, जानु नवार्धाङ्गुलं, जङ्घामूलमष्टाङ्गुलं, जङ्घामध्यविस्तारं सप्ताङ्गुलं, नलकाविस्तारं सार्धचतुरङ्गुलम्, अक्षगुल्फान्तरं पञ्चाङ्गुलं, प्रपदविस्तारं सार्धपञ्चाङ्गुलं, सार्धवेदाङ्गुलोत्सेधं पार्ष्णिविस्तारं, सार्धत्रिमात्रं पादाङ्गुलविस्तारम्, अङ्गुष्ठायामं चतुरङ्गुलं, तर्जनी तत् यवाधिका, तद्यवोनं मध्यमाङ्गुलं, त्रिमात्रार्धानामिका कनिष्ठिकायामं त्रिमात्रं कनिष्ठिकाद्यङ्गुष्ठान्तं क्रमात् सप्ताष्टार्धनवषोडशभिर्यवैरङ्गुलानां विस्तारं शेषं विवरम्।

बाहुमूलविस्तारं दशाङ्गुलं, बाहुमध्यं नवाङ्गुलं, कूर्परं सार्धसप्ताङ्गुलं, प्रकोष्ठमध्यं सप्ताङ्गुलं, मणिबन्धं चतुरङ्गुलं, सार्धतलं सार्धषण्मात्रं (तल) मध्यं सप्ताङ्गुलम्, अग्रं षण्मात्रं रुद्राष्टनवसप्तषड्यव-विपुलान्यङ्गुष्ठादिकनिष्ठान्ताङ्गुल्यग्राणि तद्यवार्धहीनं सप्तवेदेषु तुर्याग्नियवमङ्गुष्ठादिनखानां विशालं द्वियवाधिकायामं द्विपर्वाङ्गुष्ठम्, अन्यानि त्रिपर्वाणि अङ्गुष्ठमूलपर्वार्धाधिकाङ्गुलं द्व्यर्धाङ्गुलम्, अग्रपर्व तर्जनीमूलपर्व चतुर्दशयवं, मध्यमपर्व त्रयोदशयवम्, अग्रपर्व द्वादशयवं, मध्याङ्गुलीमूलपर्वाष्टादशयवं, मध्यमपर्व षोडशयवम्, अग्रपर्व सार्धपञ्चदशयवम्, अनामिकामूलपर्व सार्धचतुर्दशयवं, मध्यमपर्व सार्धत्रयोदशयवम्, अग्रपर्व द्वादशयवं, कनिष्ठाङ्गुलिमूलपर्व द्वादशयवं,

मध्यमपर्वैकादशयवम्, अग्रपर्व दशयवम्, अङ्गुलीनामग्रे द्वियवाधिकं नखाग्रं, पार्ष्णिहस्तघनं वेदाङ्गुलं, तलमध्यघनं द्व्यर्धाङ्गुलम्, अग्रमङ्गुलीवत् क्षीणं शुकोदरघनं द्व्यर्धाङ्गुलं मणिबन्धात् तदायामं सद्वियवं भागं शुकोदरविशालं द्वियवोनं त्र्यङ्गुलं, पार्ष्णिहस्तविस्तारं द्वियवोनचतुरङ्गुलं, तस्याग्रे तर्जन्यादिकनिष्ठान्तानामङ्गुलीनां मूलतलं मांसलं द्व्यर्धमात्रेण शेषतलं निम्नमङ्गुष्ठतर्जनीमूलयोः सार्धत्र्यङ्गुलमङ्गुलीनामधोमूलसन्धिरङ्गुलमेकाग्रोच्चनीचार्धाङ्गुलम्। कनिष्ठिकादेशमूलादेकादशात् तर्जनीमूलपार्श्वगा आयूरेखा मध्याङ्गुलयोः द्व्यङ्गुलं, तस्य षड्यवाधस्ताद्विद्यारेखा, तलमूलादाकराग्रं ब्रह्मरेखा दक्षिणा, दक्षिणे करतले चक्रशङ्खसमा, रेखा भवेत्। उपक्षेपनिम्नं द्वियवान्तरावर्त्तं द्व्यङ्गुलम् उपक्षेपविशालमर्धार्धाङ्गुलं त्रियवोन्नतं हस्तिमस्तकवद्विस्तीर्णमस्ताकं सोन्नतमङ्गुलम्। भ्रूतलं पञ्चचतुर्यवा सार्धपञ्चाङ्गुलायामा सार्धाष्टयवविस्तारमात्रा आनता च अर्धमात्रान्तर्या चक्रपुच्छा, चापवत् भ्रूलता स्निग्धरोमसञ्चिता।

द्व्यङ्गुलं नेत्रतारं भ्रुवस्तलादर्धाधिकाङ्गुलायामम्, एवमक्षिमण्डलमूर्ध्वाधोवर्मछन्नम्, ऊर्ध्ववर्म द्वादशयवम्, अधोवर्म चतुर्यवम्, एतयोर्योगं नयनसूत्रमूर्ध्ववर्मविस्तारं द्वियवम् अक्षिमोचनविस्तारमेकाङ्गुलमूर्ध्ववर्मणा संस्पृशेत्। षड्यवं कृष्णमण्डलं, तस्योभयोः पार्श्वयोस्तदर्धाधिकायतौ शुक्लभागौ, कनीनिकाविस्तारायामं यवं, नेत्रान्तरक्तं यवार्धं, ज्योतिर्यवप्रमाणं, दृष्टिर्यूकमात्रा, ऊर्ध्ववर्मततं यवाधिकं, द्वियवमधोवर्मनतं वर्मणो घनमर्धयवं नवतिः पक्ष्मरोमाणि, शेषं पक्ष्म नासिकापुटमध्यमूलान्तं क्रमादष्टादशदशषड्यवविस्तृतम्। नासिकाग्रमङ्गुलिविस्तारं, गोजीमूलाग्रं द्व्यङ्गुलोच्छ्रयं, पुष्करम् अष्टयवोत्सेधं, तन्मूलविस्तारं द्वियवं, मध्यविस्तारं

द्व्यर्धयवम्, अग्रविशालं त्रियवं पुटस्रोतोऽङ्गुलं, तिर्यग्यवपञ्चकं पुटस्य बहुलं, यवमात्रायता ततान्वितं, द्विनिष्पावबीजसदृशं तिलपुष्पसमाकारं नासिकापुटसूत्रान्नासाग्रं द्वियवार्ध लम्बितं, सार्धचतुर्यवं गोजीपुटं द्वियवविस्तारं, त्रिवर्गा चोत्तरपाली सार्धयवविस्तृता त्रियवार्धतता। सार्धयववेदाङ्गुलायतमुत्तरोष्ठम् आस्यतारं, तदेवं चत्वारः पुरोदन्तास्त्रियवायामविस्तृतास्तावन्तोऽधरदन्ताः, द्वियवार्धानतायताश्चतुर्यवायता दंष्ट्रा सदंशमुकुलोपमा, ऊर्ध्वाधोदंष्ट्रे अर्धयव-अधिके,पुरोदन्तात् यवार्धोनायतास्तत्समविस्ताराः पञ्चोपदंष्ट्राः, द्विपार्श्वगा द्वात्रिंशद्दन्तसङ्ख्या अधरोत्तरयोर्दन्तायामसमौ, अन्तस्तदधोदन्तरोपणौ।

जिह्वा षडङ्गुलायामा, तदर्धविस्तारा घृतजिह्वा, अङ्गुलं बाहुस्कन्द(कर्ण) रन्ध्रं कलाङ्गुलं, षडङ्गुलायतं तालुविस्तारं, त्र्यङ्गुलमास्यं नवयवान्तरं द्विगुणायतं षड्यवं, तस्यार्ध (स्यायतार्धोत्सेधं) मुत्सेधं सार्धद्वियवं पालिकारक्तभागं ततं, शेषमायामद्विगुणम्। ओष्ठादधस्ताच्चिबुकं सार्धाष्टयवं, हनुस्तत्समं, तस्माद्धनुचक्रं सद्वियवं, तदुन्नतं रुद्राक्षियवं चुबुकनिम्नम्।

हनोर्गलं गलालीकं तदङ्गुलार्धं, गलरेखा द्व्यर्धकलायामा चापसन्निभा, कर्णबन्धाद्धनोर्मध्यं दशार्धाङ्गुलं, तस्माच्चतुष्कलं सृक्वम्।

नेत्रादधस्तादपाङ्गमङ्गुलं, अपाङ्गात् कर्णमूलं षडङ्गुलं, कर्णकलाततं नेत्रसूत्रसमं कर्णप्रोतं तत्कर्णतुङ्गततं, कर्णनालमूलं कलासार्धयवं, कर्णवर्ती सार्धयवतता, पाली चतुर्यवा, कर्णपिप्पली चतुर्यवविस्तारा, द्विगुणायता यवार्धद्व्यङ्गुलायामा षड्यवाङ्गुलविशाला कर्णवर्ती, पिञ्चुषि-चलिकायतवर्तुला तुरीययवार्धविस्तारा पिञ्चुषी कर्णचलिका कर्णवर्त्युन्नतं चूल्पं तावदध्यर्धयवमर्धाङ्गुलं कर्णचलीपिञ्चुषीकोन्नतीर्यवान्तरं पिप्पलीफाल्योः बालिबालेन्दुसन्निभा यवनिष्पावबीजसदृशा पिप्पली

षड्यवायता चतुर्यवविशाला स्त्रोतोधोनेत्रात् पिञ्चुष्यधः कर्णनाल-मात्रार्धघनयुक्तौ नालौ पूर्वापरौ, विवरं षड्यवं, तयोर्नाहं मात्रं स्यात् । कर्णमूलादधोबिन्दुः(वपुः) कार्यं, कृकाटी सार्धाङ्गुलानता, तस्यावयवं भागं तद्ग्रीवायामं, तत्रार्धाङ्गुलं तारं, दशाङ्गुलं स्कन्धयोः समे कर्णबन्धादधःस्कन्धसन्धिसार्धषडङ्गुलं, सप्ताङ्गुलं, स्कन्धौ शोभान्वितौ। हिक्कासूत्रात् स्कन्धसन्ध्युच्चं चतुरङ्गुलं, तन्मध्ये द्व्यर्धाङ्गुलं जतृबाहुशिरःसन्धिरंसान्तं स्कन्धमूलतो नवाङ्गुलं द्वियवं, तस्मात् द्वियवं षडङ्गुलं बाहुशिरोजतृसमाहितं कूर्परासं 'बाह्वंसं' पञ्चाङ्गुलायतं, त्र्यङ्गुलायततोत्क्षेपसमोददण्डिते भुजौ समासन्नं (स) मापयेत्, एवं नीत्वा द्विभुजं नयेत्। कण्ठादधस्तात् ककुत् भागायता, अष्टगोलकं ककुदः कटिसन्ध्यन्तं वंशं 'विंशति' नागाधिकं, तत्समं ककुदोऽधस्तात् षड्भागे ककुद्द्वारे कक्षाधरान्तरं, तस्माद्बाहुपर्यन्तं द्वियवं नवाङ्गुलं स्कन्धं, स्कन्धे अधस्तात् अंसपीठं सार्धेन्द्रियाङ्गुलं, तस्मात् द्वियवा अंसफलका स्तनसूत्रसमा, तत्रान्तरयोर्दशाङ्गुलककुदधरं त्रिमात्रतारं सप्ताङ्गुलम्। तद्वक्षसोंसं मांसलं तयोः संभिन्नं वंशतारं कलानतं, वंशदण्डपार्श्वे चांसफलव.ःया अधो नवाङ्गुलं, बृहती स्तनान्तरं वंशात् सुप्रतिष्ठा कला, तयोर्बृहतिस्तनयोर्मध्यं सप्तदशाङ्गुलं घनं, बृहत्या कटिसन्ध्यन्तरं तन्मध्यं सप्ताङ्गुलायतं तद्घनं स्यात्, चतुर्भागं तदर्धाङ्गुलाधिकं कटि(बन्ध) विशालं, जघनस्य बहिः पृष्ठवंशपार्श्वे द्वयोः ककुदन्तरं षडर्धाङ्गुलविशालं, निम्नौ ककुन्दरस्यान्तं द्व्यङ्गुलं बिन्दुखण्डिकं, बिन्दुखण्डिकयोस्तिर्यक्कटी वेदार्धमात्रका, खण्डं द्व्यङ्गुलान्तरं सार्धतुरीयाङ्गुलं स्फिक्। बिन्दुलम्बितं नवाङ्गुलं सुवृत्तं कन्दः, कम्बुसमो वृत्तो द्विरेखावृतस्तनार्धका सद्वादशयवं मुखं, कक्षाद्धिक्कान्तं तावत् स्तनं, कक्षादष्टाङ्गुलं नवाङ्गुलनम्रमुरो

हृद्यवाधिकं, हृदयात् स्तनपीठतुङ्गमर्धाङ्गुलं, कक्षात् कक्षाधरावलम्बमत्युक्तयवकोलकं स्तनपीठस्योन्नतं कक्षस्याङ्गुलं, तत्पुरस्तान्मुखं विप्राङ्गुलं यवं वृत्तं स्तनं यवोन्नतं, स्तनाद्दक्षं द्वियवतारं तदधस्ताद् द्व्यङ्गुलं स्तनम्।

हिक्कादियवनिम्ना जतृरेखा द्व्यङ्गुला नाभिर्दक्षिणावर्त्ता षड्यवनिम्नायतेन्द्रियाङ्गुला, नाभेः श्रोणीपार्श्वे त्रिकलाङ्गुला द्व्यर्धाङ्गुला कटी, श्रोण्याशेषं मेढ्रपीठं सार्धपञ्चाङ्गुलायतं, लिङ्गतारं द्विमात्रं, मुष्कलम्बं तुरीयार्धङ्गुलं, तत्समविस्तारं वृषाननसदृशं मेढ्रम्। ऊरुबन्धं रुद्राक्षाङ्गुलं, प्रतिष्ठाङ्गुलं द्वियवं जानुमण्डलं, विष्कम्भं घनं द्व्यर्धमात्रं पार्श्वबन्धं तुरीयाङ्गुलं, पृष्ठाज्जानु त्रिमात्रार्धयवतारान्वितं कोलकं, मध्यभागे शेषं पार्श्वयोरपि, जान्वन्ता(न्तरा) यिप्रस्त्यन्तं तालं मत्स्यवदुन्नतं, पृष्ठजङ्घाश्रितं मत्स्य(पार्ष्णिद्व्यङ्गुलविस्तारा)वद्व्यर्धकलाविस्तारं नलकापृष्ठपार्श्वद्वयान्तरं तद्बहिर्गतेऽक्षगुल्फयोस्तुङ्गमनुपङ्क्तियवैर्विपुलं क्रमेणाष्टादशादिति जगतियवं प्रतिष्ठार्धाङ्गुलं पार्ष्णितारं तत्तुङ्गं कराङ्गुलं सार्धप्रपदतुङ्गमङ्गुष्ठं द्व्यङ्गुलघनं, शेषाणि विस्तारसमं तुङ्गान्यष्टयवविस्तारं दैर्घ्यम्। अङ्गुष्ठनखमुखे द्विपार्श्वे द्वयोस्तुरीययवं नीत्वा नखं नयेत्, ; चतु (स्तली) रर्धचतुःसार्धाग्निभिर्यवैः क्रमान्नखानां विस्तारं तर्जन्यादिकनिष्ठान्तं त्रियवं, तदर्धोननखायतास्तस्याङ्गुष्ठयोरन्तरं चतुर्यवं पर्वद्वयम् अङ्गुष्ठमन्यानि त्रिपर्वाणि स्वतारसदृशमग्रपर्वान्तं यवाधिकमङ्गुष्ठपर्वमूलाग्रं ज्येष्ठा(शेषा)ङ्गुलीनां द्वियवाधिक्यमेकैकं सर्वाङ्गुलीमूलानां मूलतलं मांसलं, पार्ष्णिभागे तलं पञ्चाङ्गुलायामं, शेषं वर्तुलं कारयेत्, पादौ द्वौ चक्रशङ्खरेखासमन्वितौ, सर्वं सुव्यक्तं

सुसम्पूर्णं बेरं सलक्षणं चक्षुर्नन्दनमूर्ध्वकायमधःकायं सममेव कृत्वा, सर्वत्र विष्कम्भात् त्रिगुणं वृत्तं तत्परिमाणं स्यात्। सर्वेष्वङ्गेष्वेकयवादि षड्यवान्तं हीनाधिक्यं न दोषाय भवति, तस्माद्यथोचितं युक्त्या कारयेत्।

**वा.४**

--------------------प्रमाणमधुनोच्यते।
द्वादशाङ्गुलविस्तारं मुखं सर्वत्र कीर्तितम्।।

उष्णीषात् पृष्ठकेशान्तं द्वादशाङ्गुलमीरितम्।
उष्णीषात् पूर्वकेशान्तं नवसूत्रं प्रचक्षते।।

उष्णीषात् पार्श्वकेशान्तम् एकैकस्तु नवाङ्गुलम्।
कर्णयोरन्तरं पूर्वं विंशन्मात्रं विधीयते।।

नासाग्रात् कर्णपर्यन्तं द्वादशाङ्गुलमीरितम्।
कर्णयोरन्तरे पृष्ठे सार्धद्वादशमात्रकम्।।

गोलकं कर्णविस्तारमायामद्विगुणं भवेत्।
कर्णश्रोत्रायतं तारं मात्रं मध्याङ्गुलं विदुः।।

तद्द्वयं कर्णपाल्यन्तं तत्समं कर्णपट्टिकम्।
मात्रार्धं कर्णपाली स्यादङ्कुरं कर्णनालकम्।।

लकाराकृतिवत् कर्णं बन्धवच्चूलिचूलिकम्।
अर्धमानाङ्गुलस्यासावर्धमात्राङ्गुलान्विता।।

भागावलम्बितापूर्वपरनालप्रकीर्तिता।
अपाङ्गात् कर्णमूलान्तं सप्तगात्रं प्रकीर्तितम्।।

स्वयं गोलकनेत्रस्यायामं षड्यवविस्तृतम्।

मध्ये पञ्चयवं तारं ह्यत ऊर्ध्वं प्रमाणतः।।

दृष्टियूकप्रमाणः स्यात् करवीरायतो भवेत्।
श्वेतं रक्तं तथा कृष्णं त्रिविधं चक्षुसन्निभम्।।

मत्स्यचापोत्पलाकारं त्रिविधं चक्षुसन्निभम्।
नवभिः पक्ष्मरोम स्यात् भ्रमराञ्जनसन्निभम् ।।

भ्रूचक्षुःसूत्रयोर्मध्ये द्वियवं गोलकोन्नतम्।
एवं देवं प्रकुर्वीत---------------।।

**य.२० . १ - ७७**

अत ऊर्ध्वं प्रवक्ष्यामि श्रेष्ठतालक्रमं द्विजाः।
उष्णीषात् पादपर्यन्तं चतुर्विंशच्छताङ्गुलम्।।

मूर्ध्नि सार्धाङ्गुलं चैव केशान्तं तद्द्वियङ्गुलम्।
तस्मात्तदक्षिसूत्रान्तं वेदं वेदयवाऽधिकम्।।

तस्मात्तत्पुटसूत्रान्तं तत्समं चेद्यथा कुरु।
सार्धत्रयोदशाङ्गुल्यं मुखायामं प्रचक्षते।।

तथैव हनुपर्यन्तं कारयेन्मतिमान् बुधः।
गलमर्धाङ्गुलं प्रोक्तं भागं कन्धरमुच्छ्रयम्।।

हिक्कान्तं हृदयान्तं च सार्धं त्रयोदशाङ्गुलम्।
हृदयान्नाभिपीठान्तं नाभिमेढ्रान्तकं तथा।।

तस्माज्जान्वन्तरं प्रोक्तं नक्षत्रान्तं च कथ्यते।
आश्रमं जानुमानं स्याज्जङ्घा चोरुसमा भवेत्।।

तालभागं समुत्तुङ्गं दीर्घमानं विलम्बितम्।

ऊर्ध्वे मुखे च केशान्तं नवसूत्रं प्रचक्षते।।

मूर्धान्तं पृष्ठकेशान्तं मुखमेव विशिष्यते।
अर्काङ्गुलं तदुष्णीषात् पार्श्वकेशान्तमस्तकम्।।

नवत्रिंशाङ्गुलं नाहं कर्णयोरुभयोरपि।
हनुस्तद्द्व्यङ्गुलायाममूर्ध्वोत्तुङ्गं यवाङ्गुलम्।
हनोर्गलाद्रसार्धांशं कलार्धं कण्ठवेशनम्।।

ग्रीवाग्रविपुलं तस्य अष्टांशार्धं प्रकीर्त्यते।
ग्रीवामूलस्य विपुलं ग्रीवमष्टाङ्गुलं भवेत्।।

सुवृत्तं ग्रीवमित्युक्तं त्रिरेखापरिवेष्टितम्।
हिक्कासूत्रात् क्रमात्तुङ्गं वेदस्यांशांशकं ततः।।

अर्धाङ्गुलं क्रमात् क्षीणं बाह्वन्तं च तथैव च।
हिक्काद्वितीयकं निम्नमधोजत्रु कलांशकम्।।

विपुलं बाहुपर्यन्तं सार्धस्मृत्यङ्गुलं विदुः।
चतुरङ्गुलपर्यन्तं कट्यग्रविपुलं मतम्।।

द्वाविंशदङ्गुलं चैव कटिमूलमिदं मतम्।
कटेरूर्ध्वाकृतिं कायं गोमुखाकारवच्चरेत्।।

शिष्टायाममिति प्रोक्तं भूताङ्गुलयवाधिकम्।
मुष्कविस्तारदीर्घं स्यादाश्रमाङ्गुलमिष्यते।।

जानुमूलस्य मानं तत्तदूर्ध्वे चोरुबन्धनम्।
विपुलं चोरुमूलस्य मुखमानं च कथ्यते।।

ऊरुमध्यतलं प्रोक्तमर्काङ्गुलमितीष्यते।

ऊर्वग्रविपुलं प्रोक्तं सार्धं पङ्क्तिस्ततो भवेत्।।

नन्दार्धाङ्गुलमानं स्याज्जानुमण्डलविस्तृतम्।
यवेनाष्टाङ्गुलं प्रोक्तं जङ्घामूलं विशालतः।।

सप्तमात्राङ्गुलोपेतं जङ्घामध्यस्य तारकम्।
सार्ध-----लाश्रमं प्रोक्तमलकाविपुलं तथा।।

भूताङ्गुलं विशालं च अष्टगुल्फद्वयोस्तथा।
पादयोर्मध्यविपुलं क्रमेणोन्मानमुच्यते।।

रसांशार्धमिति ज्ञेयं पादाग्रविपुलं तथा।
अक्षात् पाष्ण्र्यन्तरं वेदमुदयं तत्समं विदुः।।

अक्षादङ्गुष्ठमूलान्तं ततं मात्रार्धमिष्यते।
आश्रमाङ्गुलमानं तत्पादाङ्गुष्ठायतं ततम्।।

तालं तस्य यवोपेतं द्व्यंशकं स्यात् प्रकथ्यते।
नखतारस्य तस्यार्धं स्यात् पादायतवर्तुलम्।।

अङ्गुलस्य मुखोच्छ्रायं मांसलं पार्श्वयोर्मुखम्।
आश्रमांशद्वयोपेतं सार्धांशोनत्रियंशकम्।।

अग्न्यंशं च यवोपेतं कलार्धं चाङ्गुलं ततः।
नन्दाष्टार्धाष्टधात्वाद्यास्तर्जन्यादियवैस्ततम्।।

स्वतारार्धं नखं चैव शेषं मानाधिकारवत्।
अधस्ताद्धिक्कासूत्रस्य बाहुदीर्घदिनैस्तथा।।

युग्मं तत्कूर्परायामं प्रकोष्ठं चैकविंशतिः।
तस्माद्धराङ्गुलाग्रं तन्मुखमानं प्रशस्यते।।

तालायामस्तु धात्वंशं शिष्टमध्य(र्धा)ङ्गुलायतम्।
रसांशं द्वियवाधिक्यमनामिकोदयमुच्यते।।

प्रदेशिन्यायतं प्रोक्त सय ? वेदशरांशकम्।
चतुरंशं सपादांशं कनिष्ठाङ्गुलमायतम्।।

अङ्गुष्ठादिकनिष्ठान्तं विपुलं तस्य वक्ष्यते।
द्विपादाधिकमायामं शेषांशं तद् द्विपार्श्वयोः।।

अग्रपर्वोदयं मानं नखायामद्वयं तथा।
अङ्गुष्ठमूलपर्वं तदनामिकायां चरणाङ्गुलम्।।

तर्जनीमूलपर्वं स्याद्यवद्वयं कलाङ्गुलम्।
मध्यमायामं तत्पर्यन्तं पादोनत्र्यङ्गुलं भवेत्।।

अंशं भूतयवोपेतं कनीयं मूलपर्वकम्।
अग्रमूलद्वयोर्मध्ये शिष्टमध्यस्थपर्वकम्।।

अङ्गुष्ठे तु कलापर्व त्रिपर्वाङ्गुलयः स्मृतम्।
भूतार्धांशं कलाश्रस्य ततं मध्यं रसांशकम्।।

तस्य तारस्य मूलस्य सार्धकौशिकमात्रकम्।
त्रियर्धाङ्गुष्ठमूलोर्ध्वे तर्जनीमूलमध्यमम्।।

अङ्गुष्ठमूलिकाधस्तान्मणिबन्धावसानकम्।
शुकोदरेव भागः स्यात् घनं द्व्यर्धाङ्गुलं भवेत्।।

अध्यर्धं पार्ष्णिहस्तस्य घनमग्राङ्गुलं भवेत्।
अङ्गुलीनामधस्तात्तद्द्व्यर्धांशं मांसलं तथा।।

शुकोदरविशालं तद्वामासांशं ? पार्ष्णिहस्तकम्।

निम्नं तलस्य मध्ये तु मांसलं द्वितलाधिकम्।।

शङ्खचक्रादिकं सूक्ष्मं तलरेखा प्रकथ्यते।
बाहुमूलविशालं तन्नवमात्राङ्गुलं स्मृतम्।।

सार्धाष्टाङ्गुलमानं स्यान्मध्यमस्य विशेषतः।
सार्धं मुन्यङ्गुलं तस्य कूर्परस्य ततः पुनः।।

कौशिकं तत्प्रकोष्ठस्य भूतार्धांशं च मध्यमे।
अग्न्यङ्गुलार्धकं तस्य मणिबन्धततं विदुः।।

द्व्यङ्गुलं श्रोत्रविस्तारं तस्यायामं वसु स्मृतम्।
भ्रुवोः सूत्रसमं प्रोक्तं श्रोत्रयोरुदरं विदुः।।

पृष्ठकण्ठद्वयोरन्त स्त्रयोदशाङ्गुलिकं तथा।
प्रमुखस्य तु विस्तारं त्रयोदशाङ्गुलमेव च।।

पिप्पल्यन्तादधस्तात्तन्नाललम्बि द्विभागयोः ।
नालान्तरं चार्धमात्रं स्याद्यवं नवनालकम्।।

पिप्पलीसार्धमात्रं स्यात् सुषिरं च यथाक्रमम्।
कर्णिकाकारवत् कर्णं नालाकारं प्रकीर्त्यते।।

द्वियवं कर्णपाली च समं तत्कर्णपट्टिका।
मात्रार्धं कर्णपाली च कर्णनालं द्वियङ्गुलम्।।

लकाराकृतिवन्मध्ये पिचूष्णी ? कर्णचूलिका।
कर्णमूलादपाङ्गान्तं वसुमात्रं प्रशस्यते।।

द्व्यङ्गुलावधिकं नेत्रं तुर्यवाधिकमेव वा।
षड्यवं तस्य विस्तारं नेत्रायामं त्रिधा चरेत्।।

कृष्णमण्डलमध्ये तत्पार्श्वयोः श्वेतमण्डलम्।
तुलां कृष्णस्य मध्ये तु ज्योतिस्तद्यवमात्रकम्।।

दृष्टिमण्डलमध्ये तु बिन्दुनागांशकं तु तत्।
अक्षान्ते द्वियवं रक्तं कन्यकांशे यवं तथा।।

ऊर्ध्वतो वर्मताराः स्युर्यवार्धं च यवं चरेत्।
पक्ष्मरोमाणि नवतिः कृष्णाञ्जनसमप्रभम्।।

पादोनद्वियवं मात्रं नेत्रभ्रूभुच्छयो ? द्वयोः।
कनीनिकामपाङ्गस्य द्वयोर्मध्येऽक्षिसूत्रकम्।।

अक्षिसूत्रस्य केशान्तं मध्ये तस्य भ्रुवोः स्थितिः।
मूलादग्रात्तदा रूपं चापाकारं क्रमात् कृशम्।।

गोलकस्य यवाधिक्यं भ्रूरेखानेत्ररेखयोः।
भ्रूरेखामूर्ध्वकेशान्तात् समं तदद्व्यर्धमात्रकम्।।

अर्धमात्रं भ्रुवोर्मध्यं भ्रुवायामस्तु नासिकम्।
यवतारं भ्रुवोर्मध्यं भ्रुवः क्षमविशालवत्।।

यवाधिकद्विमात्रं स्यादक्षयोरन्तरे बुधः।
नासिकपुटयोर्ह्यः ?स्यात्तद्वद् द्व्यङ्गुलमिष्यते।।

मध्यमं स्यात् तदर्धं तु मूलं तस्यार्धकं विदुः।
गोलकांशं तु गोज्यग्रान्नासिकाग्रोदयं क्रमात्।।

नासिकाग्रं पुटोर्ध्वे तु तारं रन्ध्रद्वयं मतम्।
ताटिकायास्त्रियुग्द्वारं तारं सप्तयवार्धकम्।।

श्रोत्रस्योच्चं य (न)वं भूतं पुटनिव्रं यवेन तु।
सदृशं निष्पावबीजेन नासिकायाः पुटाकृति।।

एवं तन्नासिकाकारं तिलपुष्पमिवाकृतिः।
अंशेन पुष्करोत्तुङ्गं मध्यमं द्वियवं घनम्।।

अध्यर्धलम्बं नासाग्रलम्बनं सुमनोहरम्।
अधिकोष्ठाधिगन्तं च गोलकं द्वियवाधिकम्।।

भागार्धं यवल्योच्चं ?तदर्धं तस्य तारकम्।
---------------------------
---------------------------
भागस्तु द्वियवाधिक्यमुत्तरोष्ठायतं विदुः।।

उत्तरोष्ठस्य विपुलं त्रि वार्धयवं तथा।
यवेन चोत्तरा पाली यवार्धहृदयं बुधः।।

आनुपूर्व्या क्षयं तारमसृक्वान्तात् तदायतम्।
नन्दाष्टपङ्क्तिषट्सार्धयवोस्तत्या यवोन्नतम्।।

अधरं पालिकासार्धं मायवारमधोगतः।
दर्शनोद्दिश्य दिश्यं तद्द्वात्रिंशत् परिचक्षते।।

द्वियवं विपुलं तस्य उदयं तत्समं विदुः।
दंष्ट्रायामं यवाधिक्यं सदंशं मुकुलोपमम्।।

तदूर्ध्वे षोडशदन्तं स्यात् तावदेवाधरे बुधाः।
अधोदन्तस्य विपुलं यवार्धं तारमुच्छ्रयम्।।

जिह्वायामं षडङ्गुल्यं विस्तारं स्यात् तदर्धकम्।
ग्रीवायामं तु भागं स्यात् तुल्यं तच्च गुरुस्तथा।।

सप्तविंशतिमात्रं स्यात् कृकटिका च सन्धिकम्।

सार्धत्रयोदशांशं स्यात् तस्याधः कण्ठवेशनात्।।

सार्धभागाङ्गुलं मानं तस्याधः पृष्ठकायतः।
तस्याधोप्यायतं मानं सार्धद्वाविंशदङ्गुलम्।।

वेदांशं जानुदीर्घं स्याज्जङ्घा त्रिंशन्नवाङ्गुलम्।
आश्रमं पार्ष्णिकायामं पृष्ठायामं प्रकीर्तितम्।।

कक्षयोरन्तरं पृष्ठे सप्तविंशतिमात्रकम्।
समारभ्य पृष्ठवर्तिं च तस्योर्ध्वे दशमात्रकम्।।

स्फिक्पिण्डं कारयेत् पश्चाद्वेदोच्चं चोरुमूलतः।
बृहती स्तनयोर्मध्ये जत्रोर्मात्रघनं भवेत्।।

कट्यकान्त्यबृहत्याऽथ आयामार्धं तु भागिकम्।
तद्घनं च कलामात्रं तदूर्ध्वे चांशकं तथा।।

कटिदण्डस्य विपुलं नन्दपङ्क्त्यर्धभागिकम्।
नवार्धांशकविस्तारौ स्फिक्पिण्डौ तौ सलक्षणौ।।

नीवृद्द्व्यर्धांशकं पश्चाद् बन्धं तच्चतुरंशकम्।
अत्रानुक्तं च यत्सर्वं बुद्ध्या युक्त्या च तक्षकः।।

शिल्पशास्त्रोक्तमार्गेण कारयेद् गुरुणा सह।

### ४.१७.७१ दशतालानुसारं ध्रुवबेरस्य उपमानम्

**वि. २२ . १६०, १६१**

अथोपमानं वक्ष्ये -परभुजस्य मणिबन्धान्तरमष्टाङ्गुलमुष्णीषात् शङ्खचक्रान्तरं मुखं मध्योदरात् कूर्परान्तं षडर्धाङ्गुलमभयहस्तस्य

मध्याङ्गुलाच्चूचुकान्तं त्रयोदशाङ्गुलं,स्वागतस्य मध्यान्नाभ्यन्तरं दशाङ्गुलमुदरमध्याच्छ्रोण्यन्तारं नवाङ्गुलं वामहस्तास्य मध्यमाङ्गुलाग्रान्मेढ्रान्तरं षडङ्गुलमूरुमूलान्तरमेकाङ्गुलमूरुमध्यान्तरं द्व्यङ्गुलं जान्वन्तरं चतुरङ्गुलं जङ्घयोर्मध्यं पञ्चाङ्गुलं नलकान्तरं षडङ्गुलं कक्षयोरन्तरं पञ्चाङ्गुलं पार्ष्ण्यन्तरं चतुरङ्गुलं तलमध्यान्तरं षडङ्गुलमङ्गुष्ठान्तरमष्टाङ्गुलं; शयनस्य तिर्यग्गतब्रह्मसूत्रस्य दक्षिणतो मुखं त्र्यङ्गुलं पादाङ्गुष्ठयोर्मध्यमं विंशत्यङ्गुलं पार्ष्ण्यन्तरभागं जान्वन्तरं चतुर्दशाङ्गुलं स्यात्। एवमुपमानं लक्षयेत्।

**य.१९. ३१ - ३९**

### ४.१७.७२ ध्रुवबेरस्य लम्बमानपरीक्षोपयुक्तप्रलम्बफलकायाः स्वरूपम्

**वि. २२ . १५८ - १५९**

अथ प्रलम्बफलकां वक्ष्ये - बेरस्य लम्बमानं पूर्वमेव परीक्षयेत्। अष्टषष्ट्यङ्गुलाऽऽयतां चतुर्विंशत्यङ्गुलविस्तारां द्व्यङ्गुलघनां लघ्वीं श्लक्ष्णां फलकां गृहीत्वा परितस्त्र्यङ्गुलं नीत्वा मानसूत्रं विन्यस्य प्राक्पश्चिमभागस्थानि सूत्राणि प्रसारयेत्। मध्ये सूत्रं विन्यस्य मध्यसूत्रादेकाङ्गुलं पुटपर्यन्तसूत्रं तदेव दृगन्तरं स्यात् । तस्मात् त्र्यर्धाङ्गुलं नेत्रपर्यन्तं तस्माद् द्व्यर्धाङ्गुलं मुखपर्यन्तं तस्माद् द्व्यङ्गुलं कर्णपर्यन्तं तस्मात् त्र्यङ्गुलं कक्षपर्यन्तं तस्माद्दशाङ्गुलं बाहुपर्यन्तम्, एवं त्रयोदशसूत्राणि विन्यस्य, परभुजस्य मणिबन्धाऽवसानं मानसूत्रद्वयमेव तत्तारं नीत्वाऽभ्यन्तरं भवेत्, पुरतो मध्यसूत्रयोगं (मध्यसूत्रं) तस्माद् द्व्यङ्गुलं पुटसूत्रं, तस्माद् द्वियवाधिकं द्व्यङ्गुलं नेत्रसूत्रं, तदेव वक्त्रबाह्यं,तस्मात् त्र्यङ्गुलमन्तर्भुजावधि, तदेव कक्षपर्यन्तं तद्द्वये वा चतुरङ्गुलं बाहुपर्यन्तं

तदेव पार्श्वयोर्मध्यमे पार्श्वमध्यसूत्रं स्यात्, तस्माद् द्व्यङ्गुलं कर्णावर्तं तस्मात् त्र्यङ्गुलं शिरः पृष्ठावसानं तदेव परभुजावधि भवति इत्येवं दक्षिणोत्तरगतानि सूत्राणि षट् च विन्यस्य तत्तत्सूत्रसङ्गे सुषिरं कृत्वा तन्तुना यवमात्राणि सूत्राणि सुषिरे संयोज्य अग्रे प्रोतकुण्डलं लोहमयं मृण्मयं वा सम्बध्य सूत्राणि लम्बयेत्

**य. १९. ३९ , ४०**

**४.१७.७३ उत्तमदशतालानुसारं ध्रुवबेरस्य लम्बमानम्**

**वि. २२ . १५९ , १६०**

मध्यसूत्रं शिखामणेरूर्ध्वसंस्पर्शमेव कृत्वा लम्बयेत्, स्थानकस्य मध्यसूत्रं मौलिशिखामणेर्मध्ये मूर्ध्नोवसङ्गस्य[1] नासाग्रस्य च मध्ये कण्ठस्य हृदयस्य कुक्षेर्नाभेर्योनेः पादयोश्च मध्ये प्रलम्बं[2] तत्तत्सूत्रसंस्पर्शं नासाग्रं कुक्षिमध्यं च सूत्रात् मौल्यग्रपर्यन्तं षडङ्गुलं, हनुमध्यं यवाधिकचतुरङ्गुलं, हिक्कान्तं चतुरङ्गुलं, हृन्मध्यं द्व्यर्धाङ्गुलं, नाभिः षड्यवा, योनिमूलमेकाङ्गुलम्; ऊरुमध्यं द्व्यङ्गुलं, जान्वन्तरं त्र्यङ्गुलं, जङ्घान्तरं षडङ्गुलं, नलीकान्तरमष्टाङ्गुलं, सूत्रात् पश्चार्धं सार्धाष्टाङ्गुलम् अङ्गुष्ठाग्रं, सूत्रात् पुरतो द्व्यर्धाङ्गुलम्, एवं मध्यसूत्रवशात् मानयेत्।

बाहुपर्यन्तमेव पार्श्वसूत्रं स्यात्, चूडामणौ मूर्ध्नि कर्णपाल्यन्तरे कूर्परयोः पार्श्वे जानुजङ्घागुल्फानां मध्ये प्रलम्बयेत्, मौलिमूर्धकृकाटिक-ककुद्वंशस्फिक्पार्ष्णीनां मध्ये पृष्ठमध्यसूत्रं प्रलम्बयेत्, शिरः पार्श्वे वक्त्रबाह्ये कर्णौ चूचुकाग्रमध्ये श्रोणिपार्श्वे चोरुजङ्घयोर्मध्ये वक्त्रबाह्यसूत्रं प्रलम्बयेत्, तानि षट् च पीठावलम्बानि अन्यानि तत्तदङ्गसंस्पर्शान्येवावलम्बयेत्,

1 पा० - मूर्ध्नो भुजसङ्गस्य

2 पा० - प्रलम्बयेत्त (त्तु) त्सूत्रसंस्पर्शं

आसनस्योर्ध्वकायस्योक्तं पूर्ववन्मध्यसूत्रादीनि षट्सूत्राण्यासनोपरि लम्बयेत्, मध्यसूत्रं जानोरुपरिष्टात् केशान्तं तन्मध्यगं जानोः पार्श्वाभ्यां बाहुभ्यां च मध्यगं सूत्रं प्रलम्बयेत्, सूत्राद्वामजान्वन्तरमूर्ध्वकायार्धसमं दक्षिणजान्वन्तरं तदेव चतुरङ्गुलं त्र्यङ्गुलं यवोनं वा अन्यत् सर्वं पूर्ववत् कारयेत्।

**य.१९. ४० - ५४**

------------तद्वल्लम्बमानं तथा चरेत्।
अथात ऊरुसूत्रं तच्छिखायां मणिमध्यमे ।।

भ्रूसङ्गमस्य मध्ये तु नासाग्रस्य तु मध्यमे।
कण्ठे च हृदये कुक्षौ नाभौ योनौ च पादयोः।।

मध्ये प्रलम्बयेत् सूत्रं कुक्षिनासाग्रसंस्पृशम्।
सूत्रमामौलिपट्टान्तं समयाङ्गुलमीरितम्।।

हनुमध्यं यवाधिक्यमाश्रमं परिचक्षते।
हिक्कान्तं वेदमेवं स्यादूर्वोर्मध्यं द्वियङ्गुलम्।।

नाभौ मनुयवं प्रोक्तं योनिमूलं द्वियङ्गुलम्।
ऊरुमध्यमवर्गं स्यात् जान्वन्तरषडङ्गुलम्।।

जङ्घान्तरं तन्नागाश्च नलकापूर्वतः क्रमात्।
सार्धाष्टाङ्गुलमेवं स्यादङ्गुष्ठाग्रात् पुरो बुधः।।

तद्द्व्यर्धाङ्गुलमेवं स्यान्मध्यसूत्रं प्रलम्बयेत्।
बाह्वोः पर्यन्तमेवं स्यात् पार्श्वसूत्रं प्रलम्बयेत्।।

बाहुकूर्परयोः पार्श्वे तच्चूडामणिमध्यमे।
मूर्ध्नस्तत्कण्ठवल्यौ च ग्रीवा जानु च जङ्घयोः।।

गुल्फानां मध्यमे चैव मतिमान् सम्प्रलम्बयेत्।
मौलिमूर्धकृकाटी च ककुद्वंशस्तथैव च ।।

स्फिक्पार्ष्णिपृष्ठमध्ये तु परसूत्रं प्रलम्बयेत्।
शिरः पार्श्वे वक्त्रबाह्ये गण्डबाह्ये च चूचुके।।

श्रोण्यूरुजानुपर्यन्तं मध्यसूत्रं प्रलम्बयेत्।
तेषां पद्मादिपीठे तु लम्बान्यानि च तत्र वै।।

तत्तदङ्गस्य संस्पर्शे युक्त्या चैवं प्रलम्बयेत्।
आसनेऽप्यूर्ध्वकाये च षट्सूत्रं मध्यमादिकम्।।

लम्बयेदासनस्योर्ध्वे सर्वं पूर्ववदाचरेत्।
सूत्रान्ताद् वामजान्वन्तमूर्ध्वकायार्धसंस्पृशम्।।

तद्वेवदक्षिणे जानुं हीनान्त्याङ्गुलमेव च ।
अन्यदनुक्तं यत्सर्वं प्रोक्तं मानाधिकारवत्।।

तथैव कारयेद्विद्वान् भावं तच्छुभदर्शनम्।

## ४.१७.७४ दशतालानुसारं ध्रुवबेरस्य ऊर्ध्वमानम्

**स. २३ . १ - ८**

इदानीं सम्प्रवक्ष्यामि दशतालोन्नतक्रमम्।
औन्नत्यं पुरुषाकारं पुरुषोत्तममानतः।।

अजो हरिर्हरश्चैव दशतालेन मानतः।
पादमारभ्य मूर्धान्तं सविंशतिशताङ्गुलम्।।

सार्धवेदाङ्गुला मूर्ध्ना ललाटं तु तथा भवेत्।
ललाटं भागमेवोर्ध्वमुष्णीषं गोलकं भवेत्।।

अक्षिसूत्रात् पुटान्तं स्यात् सार्धमात्रचतुष्टयम्।
पुटाच्चिबुकसूत्रान्तं भागः सार्धाङ्गुलो भवेत्।।

गलश्चार्धाङ्गुलः प्रोक्तो ग्रीवा तु चतुरङ्गुला।
ग्रीवादिहृदयान्तं च सार्धमात्रं मुखं भवेत्।।

हृदयान्नाभिसूत्रान्तं नाभेरासीवनेस्तथा।
सीवन्या जानुपर्यन्तं पञ्चविंशतिकाङ्गुलम्।।

चतुर्मात्रस्तथा जानुर्जङ्घा चोरुसमा भवेत्।
गोलको गुल्फदेशस्तु चरणं भाग उच्यते।।

ऊर्ध्वमानं भवेदेतद्दशतालमिदं विदुः।

**४.१७.७५ ध्रुवबेरस्य प्रत्यङ्गानां सौन्दर्याधानस्यावश्यकता**

**स. १३ . ४५ - ४९**

आचार्यस्तक्षकश्चैव तावुभौ तत्परायणौ।।

प्रतिमां लक्षणैर्युक्तां तक्षकैः कुशलैरपि।
हेयदेशं व्यपोह्यैव शिलाप्रतिमकोविदैः।।

कारयेदप्रमादेन चिरकालेन चात्वरः।
साङ्गोपाङ्गं च प्रत्यङ्गं यथार्हं दर्शनीयकम्।।

स्थानकं चासनं चापि श्रीभूमीसहितं क्रमात्।
कारयित्वाऽप्रमादेन स्थापयेत्तद्बहिः पदे।।

अङ्गोपाङ्गं ततः सर्वं यवनिम्नं प्रकल्पयेत्।



# १८.दारुशूलस्थापनम्

**४.१८.१ शूलशब्दार्थः**

**स. १० . ५९**

[1]प्रतिमान्तःस्थदारुर्वै शूल इत्युच्यते बुधैः।

**४.१८.२ शूलस्थापननिमित्तम्**

**क्रि. ५. ७२ , ७३**

शूलग्रहणमार्गेण गृहीत्वा शूलमत्र तु।।

शूलं संस्थाप्य विधिवत् ध्रुवबेरं प्रकल्पयेत्।

**४.१८.३ शूलस्य मृण्मयबेरार्थत्वम्**

**स. १०. ५८**

मृण्मयं कर्तुकामस्तु शूलयुक्तं समाचरेत्।
तस्माच्छूलविधानार्थं दारुसङ्ग्रहमिष्यते।।

**४.१८.४ शूलयोग्यं दारु**

**खि. १०.१३ - १६**

गिरिस्थं वा वनस्थं वा तरुं कञ्चित् समाहरेत्।
तरूणामपि सर्वेषां खदिरः सम्प्रशस्यते।।

असनस्तदलाभे तु चम्पकः साल एव वा।
अच्चो ( ? ) वार्जुनको वापि शिरीषो बर्बरोऽथ वा।।

---

1 दारुरित्युपलक्षणम् , हेमरूप्यशिलाशूलानामपि विहितत्वात्।

शाखोपशाखासंयुक्तो रमणीयः सुशोभनः।
वृक्षमूले तु परितः तुलसीकुशसंयुतः।।

विष्णुक्रान्तेन वा वीतः स्थलपद्मयुतः शुभः।
श्वेतभूमिस्थितो वृक्षो वैष्णवः समुदाहृतः।।

**प्र. ८. ३८, ३९**

आमूलाग्रं समं वृत्तमृजुं चैव प्रदक्षिणम्।
विस्तारायामसम्पन्नं शुभायैव समायुतम्।।

सुमध्यवयसोपेतं कालपुष्पफलप्रदम्।
ईदृग्विधं महावृक्षं शूलार्थं परिगृह्णते।।

### ४.१८.५ शूलायोग्यं दारु

**खि. १०.१७ - १९**

छिन्नाग्रं भेदसंयुक्तमन्तः सुषिरसंयुतम्।
बहुपक्षिसुखावासं बहुव्यालमृगाकुलम्।।

कृमिकीटपतङ्गाद्यैः वल्लीभिः वेष्टितं तथा।
सीमान्तःस्थं श्मशानस्थं देवस्यायतने स्थितम्।।

ईदृग्गुणसमायुक्तं वृक्षं तु परिवर्जयेत्।

### ४.१८.६ शूलार्थदारुसङ्ग्रहणकालः

**खि. ११. १ - ५**

अयने चोत्तरे श्रेष्ठं दक्षिणे चापदि स्मृतम्।।

मासानां फाल्गुनः श्रेष्ठो चैत्रो वैशाख एव वा।
मार्गशीर्षकमाघौ द्वौ निन्दितौ ब्रह्मणा पुरा।।

शेषेष्वपि च कर्तव्यं त्वरितेनेति मे मतिः।
त्रिषूत्तरेषु रोहिण्यां हस्ते स्वात्यां पुनर्वसौ।।

रेवत्यां श्रवणे चैव वारुणे वायुदैवते।
युग्माश्च तिथयस्सर्वाः प्रशस्ता विष्टिवर्जिताः।।

चरराशिं विवर्ज्यैव स्थिरराशौ समाहरेत्।
ग्रामस्य यजमानस्य चानुकूले दिने चरेत्।।

**ज्ञा. ४०. ७२**

[ अत्र शुभर्क्षमात्रं निर्दिश्यत इति विशेषः। ]

**वि. १७. ७८**

[ अत्र पूर्वपक्षे कर्तुरनुकूलर्क्षे इत्येव निर्दिश्यत इति विशेषः। ]

**य. १२. ६**

[ अत्रापि कर्त्रनुकूलर्क्षमात्रं निर्दिश्यत इति विशेषः। ]

### ४.१८.७ शूलार्थदारुसङ्ग्रहणप्रकारः

**खि. १०. ४ - १२ ; १९ - ५०**

यजमानो गुरुश्चैव श्वः कार्यं प्राप्य निश्चितम्।
आहूय तक्षकं चात्र शिल्पशास्त्रविचक्षणम्।
उपायज्ञं युवानं च सम्भारान् परिगृह्य च ।।

कुठारं परशुं चान्यान् सह वैवधिकेन च ।
यजमानो गुरुश्चैव निमित्तानि च लक्षयेत्।।

शुभे निमित्ते गच्छेच्च निवर्तेताशुभे सति।
आचार्यो यजमानेन सह बालालयं विशेत्।।

तत्र स्थितं च देवेशं प्रणम्यैवानुमान्य च।
देवदेवं समभ्यर्च्य पायसादीन् निवेदयेत्।।

दक्षिणां च ततो दत्वा देवदेवं प्रणम्य च ।
चक्रामितादिसंयुक्तं सर्वद्रव्यसमायुतम्।।

यानेष्वारोप्य देवेशं चक्रवीशामितांस्तथा।
वाहनानामलाभे तु ब्राह्मणैरेव वाहयेत्।।

अलाभे शैषिकादीनां तैर्विनैव व्रजेद् गुरुः।
देवस्याभिमुखे स्थित्वा यजमानयुतो गुरुः।।

प्रणम्य देवदेवशं 'जितं त' इति चोच्चरन्।
जपंश्च शाकुनं सूक्तं ब्रह्मघोषसमन्वितम्।।

स्तोत्रध्वनिसमायुक्तं सर्ववाद्यसमन्वितम्।
प्रदक्षिणं ततः कुर्याद्देवेशं मनसा स्मरन्।
पूर्वं पूर्वमुखो गत्वा उत्तरं वा यथार्हकम्।।

------------------------------।
------------------------------।।

शास्त्रोक्तं वृक्षमाज्ञाय गृह्णीयाद्विधिपूर्वकम्।।

पूर्वस्मिन्नेव दिवसे रात्रौ होमं समाचरेत्।
तस्य वृक्षस्य परितो मण्डलान्युपलिप्य च ।।

पञ्चवर्णैरलङ्कृत्य धान्यानि च समास्तरेत्।
वृक्षस्य पश्चिमे स्थाप्याः चक्रवीशामिताः क्रमात्।।

वृक्षस्य चोत्तरे भागे कुण्डमौपासनं चरेत्।
वृक्षस्य दक्षिणे भागे सर्वद्रव्याणि सन्न्यसेत्।।

स्नात्वा स्नानविधानेन गुरुराघारमाचरेत्।
वैष्णवं विष्णुसूक्तं च हुत्वा मन्त्रविदत्वरः।।

वृक्षस्य पूर्वभागे तु ऐशान्यां रुद्रमर्चयेत्।
ईशानेन्द्रान्तरे भूतान् ऐन्द्रे चेन्द्रं समर्चयेत्।।

याम्ये यमं समभ्यर्च्य मातॄरभ्यर्च्य वारुणे।
सोमं सौम्ये समभ्यर्च्य वीरं सोमस्य पूर्वतः।।

तत्स्थाने पूर्वतोऽभ्यर्चेत् अर्घ्यान्तं च यथाक्रमम्।
वृक्षे वृक्षेन्द्रमभ्यर्चेत् पुष्पगन्धानुलेपनैः।।

चक्रामितौ समभ्यर्चेत् सप्तविंशतिविग्रहैः।
अन्नं प्रभूतमाहृत्य पुष्पाक्षतसमन्वितम्।।

लाजापूपसमायुक्तं तिलशाकसमन्वितम्।
बलिमाहृत्य तत्काले कूर्चयुक्तेन वारिणा।।

रुद्रादीनां बलिं क्षिप्त्वा तत्तद्दिक्षु यथाक्रमम्।
वनस्पतिभ्यः पुर्वे तु कुमारीभ्यस्तु दक्षिणे।।

पश्चिमे वृक्षराजेभ्यः सर्वकामेभ्य उत्तरे।
बलिमेवं च दत्त्वा तु पश्चादग्निं प्रणम्य च ।।

परिषेकं जलैः कृत्वा समिद्भिर्जुहुयात्ततः।
अग्नये वनराजाय सोमाय च यमाय च ।।

शङ्खाय स्थूललक्षाय व्याधाय मृगरूपिणे।
वनस्पतिभ्यो यक्षेभ्यो वल्लीभ्यः कुसुमाय च ।।

शलाटवे बृहत्त्वचे पुण्यायामिततेजसे।

सूर्याय सूर्यरूपाय शृङ्गिणे भूतरूपिणे।।

नागहस्ताय दिव्याय त्रिहस्तायेति वै हुनेत्।
विघ्नाय विघ्नरूपाय पिनाकाय प्रसारिणे।।

मुरुण्डाय च न्यर्णाय नागेभ्यश्च ततः परम्।
भूतराजेभ्यश्चारणेभ्यः दिवाचेरभ्य इत्यपि।।

नक्तञ्चरेभ्यः सन्ध्याभ्यः सन्ध्याचरेभ्य इत्यपि।
अप्सरोभ्यश्च यक्षीभ्यः कुमारीभ्यश्च हूयताम्।।

आसुरीभ्यो राक्षसीभ्यः पिशाचीभ्यो वनाय च ।
वृक्षाय वनचारिभ्यो वृक्षदेवेभ्य इत्यपि।।

स्थानदेवेभ्य इत्युक्त्वा विद्याधरेभ्य इत्यपि।
रूपिभ्यो मिथुनेभ्यश्च सुखेभ्यश्चापि हूयताम्।।

व्याहृत्यन्तं च हुत्वा तु अग्निमानम्य चादरात्।
वृक्षे कृत्वा तु पर्यग्निं 'निर्दग्ध' मिति मन्त्रतः।।

पुण्याहं वाच्य बध्नीयात्ततः प्रतिसरं क्रमात्।
यूथाधिपस्य चक्रस्य 'रक्षस्वे' ति समुच्चरन्।।

ततः प्रभाते धर्मात्मा स्नात्वा स्नानविधानतः।
वृक्षस्य दक्षिणे पार्श्वे स्थित्वा परशुमाहरेत्।।

पूर्वतस्ताडयेद्विद्वान् ऐन्द्रं मन्त्रं समुच्चरन्।
'यमो दाधार' इत्युक्त्वा दक्षिणे चापि ताडयेत्।।

'ये ते शत' मिति प्रोच्य वारुणे ताडयेत्ततः।
'सोमं राजान' मित्युक्त्वा उत्तरे चापि ताडयेत्।।

'अतो देवोदि' जप्त्वा तु अन्तरे ताडयेत्ततः।
शिल्पिनं च सामाहूय पूजयित्वा स्वशक्तितः।।

परश्वादीनि सङ्गृह्य छेदयेत्तु शनैः शनैः।
तरोः पश्चिमदिक्पातस्त्वत्यन्तं शुभदो भवेत्।।

ततस्त्वगादीन् व्यपोह्य सारं भागं समाहरेत्।
अग्रं पादं मुखं पृष्ठं लक्षयित्वा यथोचितम्।।

यथार्हं सारसंयुक्तभागान् सम्यक् समाहरेत्।
तत्र दक्षिणभागार्हं योजयेद्दक्षिणे तथा।।

वामं वामे योजयेच्च वंशदण्डं तु मध्यमे।
एवमाहृत्य यत्नेन करीषेनानुलेपयेत्।।

निवेशयित्वा वैवधिके सर्वमाहृत्य यत्नतः।
अन्तहोमं ततो हुत्वा पश्चाद्देवान् विसृज्य च ।।

देवागारं समानीय तानि गुप्ते विनिक्षिपेत्।

## ४.१८.८ शूलदारोः तक्षणम्

**ज्ञा. ४१ . ७४**

अथ शूललक्षणम्। प्रोक्षणैः प्रोक्ष्य 'अतो देवादिना' अग्रं, 'रुद्रमन्य' मिति मध्यं 'ब्रह्म जज्ञान' मिति अधस्तादभिमृश्य गोदानसूक्तेन वास्येन (स्या?) तक्षयेत्।

### ४.१८.९ शूलस्य त्र्यंशत्वम्

**ज्ञा. ४२ . ७५**

मेढ्रादानाभेश्चतुरश्रं तद्ब्राह्ममिति, नाभेर्हिक्कान्तरमष्टाश्रं भवभागमिति हिक्कया मूर्धपर्यन्तं वृत्तं त्रैनेत्रमित्येव त्र्यंशं शूलमित्यात्रेयः।

**प्र. ५ . ५४**

### ४.१८.१० हेमरूप्यकृतं शूलम्

**प्र. ८ . ५१**

हेमरूप्यकृतं शूलं सर्वसम्पत्समृद्धिदम्।
लोहैरन्यैर्न कर्तव्यमभिचारस्य कारणम्।।

### ४.१८.११ ध्रुवबेरशूलानां प्रत्येकं मानम्

**वि. १७ . ८० - ८२**

ध्रुवबेरोक्तमानेष्विष्टमानं विनिश्चित्य, तन्मानं चतुर्विंशतिशतभागं विभज्य एकांशं देहलब्धाङ्गुलं तच्छूलानामग्रं पादं विदित्वा तल्लक्षणोपेतं तनुकरणं कृत्वा शूलानाहृत्योर्ध्वकायमधःकायं च समं कुर्यात्।

वंशदण्डस्यायामं द्विषष्ट्यङ्गुलं स्थानकासनशयनानां मेढ्रान्तं, नाभ्यन्तं चतुरश्रं, नाभेर्हिक्कान्तमष्टाश्रं, हिक्काया उष्णीषान्तं वृत्तम्, अन्येषां देवानां चतुरश्रं नियुञ्जीत।

वंशदण्डमूलविस्तारं भागार्धाङ्गुलम्। अग्रभागं मूलादष्टांशोनं वा। आसनस्याष्टाङ्गुलमधिकं नीत्वा चतुरङ्गुलमवगाढप्रवेशं चतुरङ्गुलमासनोदयं भवति।

वक्षोदण्डस्यायामं चतुस्त्रिंशदङ्गुलं, सप्ताङ्गुलविस्तारं, तदर्धं बाहल्यम्।

कटिदण्डायामं षोडशाङ्गुलमष्टाङ्गुलविस्तारं तदर्धं बाहल्यं तत्पार्श्वयोर्मध्ये निम्नयुतम्। तन्निम्ने दक्षिणे दक्षिणपार्श्वयोः पार्श्वदण्डौ संयोज्य, वक्षोदण्डस्य

पार्श्वयोर्मध्ये निम्नं कृत्वा संयोजयेत्।

वक्षोदण्डस्य मूले चाग्रे च तन्माने शिखाचतस्रः कलाऽङ्गुलायता-स्तत्समविस्तृतास्तदर्धघना एताश्चतुर्भुजे द्विभुजे द्वे शिखे कृत्वा कटिदण्डस्य माने शिखायामं त्र्यङ्गुलं द्व्यङ्गुलविस्तृतं, तत्समबाहुल्यं तेन वंशदण्डेन योजयेत्।

ऊरुदण्डायामं सप्तविंशत्यङ्गुलं मूले शिखासंयोजनार्थं युक्त्या कारयेत्।

जानुभागं, जङ्घा चोरुसमायता, पादं भागमूलविशालं, चतुरङ्गुलं, त्र्यङ्गुलं(वा) जङ्घामूलं त्र्यङ्गुलम्, अग्रं कलाङ्गुलं, तलायामं सप्तदशाङ्गुलं, तस्य मूलं त्रिमात्रमग्रतारं चतुर्मात्रम् अथवा स्थानकस्य पाददण्डयोर्जानुसन्धिं न वा चरेत्, एकमेव कारयेदिति केचित्।

बाहुदण्डायामं सप्तविंशत्यङ्गुलं तन्मूलं वंशदण्डाग्रसमम् अग्रं तदष्टांशोनं युक्त्या वंशदण्डाग्रे संयोज्य ताम्रपट्टेन बन्धयेत्। अथवा दण्डाग्रे अपरभागे चैकदारुणा कारयेदिति केचित्। प्रकोष्ठदण्डस्यायाममेकविंशत्यङ्गुलं बाहुदण्डमूलं त्र्यङ्गुलं, तदग्रं द्व्यङ्गुलं, प्रकोष्ठमूलं द्व्यर्धाङ्गुलं, तस्याग्रमध्यर्धाङ्गुलमन्यान्यङ्गानि तत्तदङ्गेषु यथान्यायं संयोजयेत्। प्रसारितपादयोर्हस्तयोर्जान्वोस्सन्धिं न वा चरेत्। इदं शास्त्रज्ञैः शिल्पिभिः सम्यक् प्रकल्पयेत्।-------------- गर्भागारं पूर्ववत्[1] षट्पञ्चाशत् द्विशतभागं कृत्वा तद्विहिते पदे स्थानकादिध्रुवबेरं कारयेत्।

**स. १६ . १ - १७**

अथातः सम्प्रवक्ष्यामि बेरशूलस्य लक्षणम्।
ध्रुवबेरोक्तमानेषु यथाप्रोक्तेषु तेषु च ।।

1 गर्भालयपदविन्यासोक्तवत्।

इष्टमानं विनिश्चित्य दशतालं प्रकल्पयेत्।
विधिवद् बेरयोग्यानां दारूणां काष्ठकारुभिः।।

मूलमग्रं च विज्ञाय शूलान् सम्यक् प्रकल्पयेत्।
स्थानकासनशय्यानां चतुरष्टाश्रवृत्तकान्।।

अर्धेन षष्टिरङ्गुल्यः पश्चाद्दण्डस्य चायतिः।
नाहश्चापि चतुर्विंशच्चतुर्दशषडङ्गुलम्।।
ऊरुदण्डस्य चायामः पञ्चविंशतिकाङ्गुलः।
नाहः षोडश चोद्दिष्टो भागो जान्वोरुदाहृतः।।

जङ्घादण्डस्य चायामश्चोरुदण्डसमो भवेत्।
द्वादशाङ्गुलको नाहस्तस्यापि परिकीर्तितः।।

गोलकं चापि गुल्फस्य मानं पार्ष्ण्योर्द्विगोलकम्।
पार्श्वस्थदण्डयोर्मानमनुरूपं प्रकल्पयेत्।।

नाहं तयोः समुद्दिष्टमादित्याङ्गुलसम्मितम्।
कटिदण्डस्य चायामं षोडशाङ्गुलमिष्यते।।

द्विभागं तस्य विस्तारमुत्सेधस्तु षडङ्गुलः।
मध्यदण्डस्य चायामं द्वात्रिंशत्समुदाहृतम्।।

विस्तारं च घनं चापि कटिदण्डवदिष्यते।
बाहुदण्डस्य मानं स्यादङ्गुलानां तु विंशतिः।।

तस्यार्धं नाहमुद्दिष्टं प्रकोष्ठश्चैकविंशतिः।
अङ्गुलीनां तथा नाभौ नवाङ्गुलमुदाहृतम्।।

बाहुप्रकोष्ठजङ्घानामूर्वोरपि तथैव च।

सम्बन्धदारुदेशानां प्रमाणं च यथोचितम्।।

वक्रमङ्कुशवत् कुर्यादग्रं तेषां यथादृढम्।
पाणिपादतलायामश्चादित्याङ्गुल उच्यते।।

घनमर्धाङ्गुलं प्रोक्तं तौ तु ताम्रेण योजयेत्।
यद्यासनं स्यात्फलकां चतुरङ्गुलमुन्नताम्।।

उचितायतविस्तारामासने योजयेद्गुरुः।
वंशदण्डस्य चाग्रेण सार्धद्वाविंशदङ्गुलम्।।

व्यपोह्य वक्षोदण्डं च योजयेत्तद्विधानवित्।
वक्षोदण्डोपरिष्टात्तु नाहः स्यात् द्वादशाङ्गुलः।।

कट्यूर्वोर्दण्डयोश्चापि पार्श्वदण्डौ सुयोजयेत्।
अनुक्तमत्र यच्चापि युक्त्या तक्ष्णा च कारयेत्।।

**ज्ञा. ४२ . ७५**

**ज्ञा. ४१ . ७४ , ७५**

[1]पश्चाच्छिल्पी भगवन्तं ध्यात्वा ऊर्ध्वभागे दक्षिणे दक्षिणं करं वामे वामं करं मध्ये वंशदण्डम् अधोभागे तथा पादादूरुदण्डायामं षड्विंशत्यङ्गुलं जान्वोर्भागं जङ्घे वा ऊरुसमे चरणौ जानुसमौ पार्ष्णी चतुरङ्गुले पुरस्तादादित्याङ्गुलमूरू जङ्घे च भवतः इत्यङ्गिराः।

कटिदण्डायामं चतुर्यवाधिकम् ऋत्विक्परिणाहं क्रियाङ्गुलं कोलकं शिखायामविस्तारमर्धाधिकाङ्गुलं पलाशमुकुलोपमं वंशदण्डं चतुरश्रं विस्तारं भागायाममश्विनीयुतं षष्ट्यङ्गुलं वक्षोदण्डायामं द्वात्रिंशदङ्गुलं बहुल-

1. शूलदारुतक्षणानन्तरम्।

मर्धाधिकं तालं विस्तारं पर्वपार्श्वयोर्भुजभेदेन शिखाः कार्याः। शिखायामं कोलकं तदर्धविस्तारं वक्षोदण्डं त्रिभिश्छिद्रैः तद्वत्कटिदण्डं च। पार्श्वदण्डायामं प्राजापत्यविस्तारमर्धाधिकं त्रिमात्रमूर्ध्वाधश्शिखामानं कोलकं बाहुदण्डायाममङ्गनायुतं त्रिष्टुप् प्रकोष्ठदण्डायाममेकोनविंशत्यङ्गुलं भुजनाहं प्रादेशपरिमण्डलं प्रकोष्ठं वस्वङ्गुलं स्रुववदानुपूर्व्येण कार्श्यवत् भवति। जाम्बूनदरौप्यशुल्बान्यतमैर्वा अधिकप्रादेशेन पाणितलं करोति। ऊरुमूलपरीणाहमृत्विगङ्गुलं पृष्ठफलकामानं प्राणायामाङ्गुलं वस्वङ्गुलं वा करोति। अर्धाधिकपञ्चाङ्गुलं चतुरङ्गुलं त्र्यङ्गुलं विस्तारं रुक्मरूप्यशुल्बतरूणामन्यतमेन मौलिदण्डं रुक्मरूप्यताम्रान्यतमेन शूलं भवितव्यमित्याचष्टे भृगुः।

प्र. ८ . ५२ - ८०

विष्णुशूलं तु केशानां श्रेष्ठं पट्टिकमेव च ।
ध्येयं मेढ्रादयश्चोर्ध्वं समं भागस्य यत्त्रयम्।।

ऊरुकेशान्तपर्यन्तं तस्यार्धं च तकं ? मुखम्।
सरन्ध्रयवकं चोर्ध्वे मानशूलं शिरोधरम्।।

हिक्कायां षड्यवं पञ्चाङ्गुलं नाभ्यन्तकं मतम्।
त्रयोदशाङ्गुलयवं ततो मेढ्रं तु नाभ्यधः।।

योनेर्नाभेस्तुर्यादश्रं ब्राह्ममष्टौ मतं ततः।
हिक्कान्तं वैष्णवं भागं ततो वृत्तं शिवांशकम्।।

उष्णीषं मातृकं शूलं स्थानादीनां सनातनम्।
स्थानासनशयानानां चतुरश्राष्टवर्तुलम्।।

यथाक्रमेण युञ्जीयादेवं वा पूर्वमुक्तवत्।

सर्वेषां देवतानां च सामान्यं चतुरश्रकम्।।

चतुर्मात्रार्धविस्तारं शूलमूलविशालकम्।
अग्रतारं चतुर्मात्रमष्टांशोनमथापि वा।।

द्वात्रिंशदङ्गुलायामं वक्षोदण्डस्य चोच्यते।
तर्म ? विस्तृतयोर्बाह्ये मातृसूत्रसमोर्धयोः।।

वक्षोदण्डायतं स्वेन मुखेन द्विगुणं मतम्।
उक्त्वा समं तु बाह्वग्रे तत्सप्तांशविहीनकम्।।

तारं सप्ताङ्गुलं तेषां येन सार्धं त्रिमात्रकम्।
षोडशाष्टचतुर्मात्राऽयामतारसमन्वितम्।।

कटिदण्डं भवेत्तस्य पार्श्वमध्यमनिम्नकम्।
कृत्वैव निम्नकं वक्षोदण्डमध्ये प्रकल्पयेत्।।

शेषयोर्वंशदण्डे तु नाभ्यन्तं निम्नमध्यकम्।
दक्षिणे मूलमध्ये तु अग्रं कुर्याद्द्वयोरपि।।

वक्षोदण्डस्य मूलाग्रे शिखा सूदस्रदायतम्।
कालाङ्गुलकलातारं कलार्धविपुलं मतम्।।

एवं चतुर्भुजं कृत्वा द्विभुजे द्विशिखं तथा।
चतस्रः शिबिकास्तस्मात् तस्यामेवाष्टबाहुके।।

यावन्तो बाहवस्तस्मिन् तावत्यश्च शिखा मताः।
अध्यर्धाङ्गुलविस्तारं शिखायामं तदेव हि।।

कटिदण्डं शिखायामं तारे द्वित्र्यङ्गुले क्रमात्।

विना द्विमात्रमेव स्यात् द्विशिखं कटिदण्डकम्।।

श्रोणिभागादधस्तेन शेषयेद्वंशदण्डकम्।
ऊरुदण्डालयं सप्तविंशदङ्गुलमुच्यते।।

जानुभागं ततो जङ्घाप्यूर्ध्वदण्डसमायता।
पादभागा भवेदूरुः जङ्घयोर्जानुमानकम्।।

आरोप्य मानयेज्जानु दण्डस्याऽसम्भवादपि।
पाददण्डे समारोप्य मानयेत्तलतुङ्गकम्।।

ऊरुदण्डविशालं स्यात् मूले भागं तदश्रके।
कलाङ्गुलं तदेकं स्याज्ज्ञङ्घामूलविशालकम्।।

कलाविशालं जङ्घाग्रं कलायामं दशाङ्गुलम्।
त्रिमात्रकलमूलस्य तारमग्रेऽधिकाङ्गुलम्।।

सप्तविंर्शातवाग्रोषं दण्डदीर्घं ततः कला।
कोर्परस्यात्प्रकोष्ठस्य दीर्घं दशकलाङ्गुलम्।।

प्रकोष्ठबाह्वोरारोप्य कोर्परं जानुवद्भवेत्।
त्र्यङ्गुलं द्व्यङ्गुलं बाहुदण्डमूलाग्रविस्तरम्।।

प्रकोष्ठं दण्डमूलस्य विशालं च द्विमात्रकम्।
अध्यर्धाङ्गुलमग्रस्य विशालं लक्षणान्वितम्।।

वक्षोदण्डशिखामध्ये बाहुमूलगते शिखे।
बाहुमूलगताभ्यां तु वक्षोदण्डशिखागताम्।।

शेषयेदग्रभागेभ्यः कोर्परे शेषयेत्ततः।

प्रकोष्ठमूलगाभ्यां वै शिखायां तद्विधानतः।।

कटिदण्डोरुदण्डाभ्यां तच्छेषं बाहुदण्डवत्।
जानुकोर्परमुद्दिष्टं तस्य तु द्विशिखे मतम्।।

शेषयेन्नलकानां तु प्रकोष्ठे तु भवेद्बुधाः।
प्रसारितानां पादानां जानुसन्धौ तु गृह्यताम्।।

तथैव विसृजानां च बुधानां कोर्परं मतम्।

**४.१८.१२ श्री-भूदेवीबेरयोरवयवभूतशूलानां प्रत्येकं मानम्**

**स. १६ . १८ - २८**

अथ श्रीभूमिदेव्योस्तु शूलमानं प्रवक्ष्यते।
नारायणस्य देवस्य बाहुमानेन योजयेत्।।

वेदाङ्गुलाधिकं मानं नवतालं तयोर्यथा।
शूलान् सङ्कल्पयेत् पश्चात् देवीभ्यां च पृथक्क्रमात् ।।

वंशदण्डस्य चायामं षट्पञ्चाशत्तथाङ्गुलम्।
बाह्वोर्द्वादश चोद्दिष्टः पार्श्वदण्डो यथोचितः।।

नवाङ्गुलस्तयोर्नाह उभयोः समुदाहृतः।
वक्षोदण्डस्य चायामश्चतुर्विंशाङ्गुलो भवेत्।।

ऋत्वङ्गुलश्च विस्तार उत्सेधो भाग उच्यते।
कटिदण्डस्य चायामो मुखं त्र्यङ्गुलमुन्नतम्।।

षडङ्गुलस्तु विस्तारस्तस्यापि परिकीर्त्यते।
ऊरुदण्डस्य चायामो यवद्वयमुदाहृतम्।।

यवो नाहः समुद्दिष्टो जानुभागं प्रकल्पयेत्।

जङ्घा चोरुसमा नाहे दशाङ्गुलमुदाहृतम्।।

चरणं भाग उद्दिष्टो देव्योरेवं क्रमेण च ।
बाहुदण्डस्य चायामः षोडशाङ्गुल उच्यते।।

तदर्धमेव नाहः प्रकोष्ठः सप्तदशाङ्गुलः।
नाहं तस्याङ्गुलं तस्य शिष्टं देववदाचरेत्।।

इति संक्षेपतः प्रोक्तं शूलमानं तपोधनाः।
नारायणस्य देवीभ्यामपि चैवं प्रधानतः।।

अन्येषां परिवाराणामुक्ततालप्रमाणतः।
शूलांश्च कल्पयित्वैव स्थापयेद्गुरुरत्वरः।।

**प्र. ८ . ९८ - १०४**

स्त्रीणां शूलविभागस्तु लक्ष्म्यादीनां प्रवक्ष्यते।
नासामानविभगगं च शूलदण्डाऽयतं मतम्।।

भागतारं भवेद्वंशं दण्डं तच्चतुरश्रकम्।
यदुक्तं बाहुपर्यन्तं तारं तस्माद्द्विपार्श्वयोः।।

बाहुमूलविशालार्थ त्यक्त्वा यावत्तदन्तरम्।
तावत्तु परमं वक्षोदण्डस्यायाममुच्यते।।

कच्छांशोनं कराकारं कटिदण्डायतं मतम्।
ऊरुतारं तु तुर्यांशादूरुदण्डविशालकम्।।

जङ्घादण्डं त्रिभागैकं तावदष्टांशदण्डकम्।
मूलमेव मतं चैषां अग्रमष्टांशहीनकम्।।

पार्श्वदण्डं न योक्तव्यं स्त्रीणां शूले कथञ्चन।
पुरुषाणां प्रयोक्तव्यमध्यर्धाङ्गुलिविस्तरम्।।
सर्वेषामपि तालानां शूलमेवं विदुर्बुधाः।

**ज्ञा. ४२ . ७५ , ७६**

देवीनां वंशायामं वेदाधिकशक्वरी पार्श्वायामं रसाधिकं त्रिंशदङ्गुलं वक्षः चतुर्विंशदङ्गुलं विस्तारं, रसं तदर्धबहुलमर्धाधिकं द्विमात्रं शिखायाम-मध्यर्धविस्तारं काव्या (कट्या?) याममृत्विग्विस्तारं (?) रसमुत्सेधं कोलकं शिखायामं सार्धमात्रं तदर्धमात्रं तदर्धविस्तारमूरुविस्तारं पावकमग्रं द्वियवाधिकं कोलकं जङ्घामूलविस्तारं यवहीनांशुशुक्षणिः ग्रीवाविस्तारं कोलकं बाहुविस्तारं यवाधिकाग्निरग्रविस्तारं कोलकं प्रकोष्ठविस्तारमर्धाधिकं तत्त्वमग्रविस्तारं द्वियवाधिकमात्रम्।

**वि .१७ .८१, ८२**

देव्योश्शूलं चतुरश्रं किञ्चिद्वक्रं, वंशदण्डस्यायामं षष्ट्यङ्गुलं, मूलभागविस्तारं, तदष्टांशोनमग्रं, वक्षोदण्डायामं पञ्चविंशत्यङ्गुलं षडङ्गुलविस्तारं तदर्धबाहुल्यं कटिदण्डायामं यवार्धोनविंशत्यङ्गुलं सप्ताङ्गुलविस्तारं (तदर्धं) तदर्धबाहुल्यम्, ऊरुदण्डस्य तलविशालं तत्तुरीयांशोनं, जङ्घाकारं तत् त्रिभागैकोनं, तेषामग्रतारमष्टांशोनं अन्यत्सर्वं समानम्। देव्योः पार्श्वदण्डं न योजयेत्। अवक्रमृजुकायस्य वक्रतनोर्वक्रमेव कारयेत् । अत्राऽनुक्तं शिल्पशास्त्रोक्तमार्गेण कारयेत्।

**४.१८.१३ शूलानां उक्तप्रमाणातिक्रमणे दोषः**

**ज्ञा. ४२ . ७६**

प्रमाणहीनं सर्वप्रजामारणम्। तस्मात् ज्ञात्वैव बुद्ध्योह्य ( हित्वा?) यत्नतः कारयेत्।

**४.१८.१४ जीर्णोद्धारे शूलानां प्राक्तनानामभ्युपगमः**

**ज्ञा. ४२ . ७५**

पौराणिकेऽपि पुराणं यत् तदेव कुर्यात्। अन्यथा राष्ट्रस्य यजमानस्य राज्ञो महत्तरो दोषो भवति।

**४.१८.१५ शूलस्थापनकालः**

**खि. ११ . १ - ५**

अयने चोत्तरे श्रेष्ठं दक्षिणे चापदि स्मृतम्।।

मासानां फाल्गुनः श्रेष्ठश्चैत्रो वैशाख एव वा।
मार्गशीर्षकमाघौ द्वौ निन्दितौ ब्रह्मणा पुरा।।

शेषेष्वपि च कर्तव्यं त्वरितेनेति मे मतिः।
त्रिषूत्तरेषु रोहिण्यां हस्ते स्वात्यां पुनर्वसौ।।

रेवत्यां श्रवणे चैव वारुणे वायुदैवते।
युग्माश्च तिथयः सर्वाः प्रशस्ता विष्टिवर्जिताः।।

चरराशिं विवर्ज्यैव स्थिरराशौ समाहरेत्।
ग्रामस्य यजमानस्य चानुकूले दिने चरेत्।।

**य. १३. १**

**ज्ञा. ४३ . ७६**

[ अत्र शुक्लपक्ष इति अधिकम्। ]

**वि. १८ . ८२**

[ अत्र शुक्लपक्षे कृष्णान्त्यत्रिभागं मुक्त्वा इति अधिकम्। ]

## ४.१८.१६ शूलस्थापने अङ्कुरार्पणस्य कालः

**स. १७ . १ - २**

अथातः सम्प्रवक्ष्यामि शूलसंस्थापनाविधिम्।
स्थापनादिवसात्पूर्वं नवमे वाथ सप्तमे।।

पञ्चमेऽहनि वा कुर्याद् विधिना चाङ्कुरार्पणम्।

**खि. ११ . ६**

**वि. १८ . ८२**

[ अत्र तृतीये वाह्नि अङ्कुरार्पणं कुर्यादिति अधिकम्। ]

**य. १२. २**

[ अत्र अङ्कुरार्पणानन्तरं शूलानां जलाधिवसः अधिकतया निर्दिश्यत इति विशेषः। ]

## ४.१८.१७ शूलस्थापकानां पुरुषाणां नियमाः

**ज्ञा. ४३ . ७६**

तत्र स्थापकाश्चत्वारः सुलुप्तश्मश्रुकेशाः सुवस्त्राः अपराह्णे उपवासव्रतं कुर्युः। सोपवासं शिष्यं हिरण्यपवमानैः 'अणोरणीयान्' इत्यनुवाकैश्चाभ्युक्ष्य गुरुः शिष्यस्त्वमित्याहरेत् । तेन शिष्यः पापात् प्रमुच्यत इति। स पत्नीसहितः श्रुत्वा कल्पविधिं भगवन्तं ध्यात्वा श्रद्धाभक्ती पुरोधाय निशायां स्वपेत्। प्रभाते स्नात्वा शुचिः शुचिवासस्समन्वितोऽन्तर्जलगतः अघमर्षणं कृत्वा प्राणायामं सहस्रं शतं वा अष्टयुतमभ्यसेत्।

## ४.१८.१८ शूलस्थापने यागशालानिर्माणम्

**स. १७ . २ - ८**

प्रमुखे दक्षिणे वापि यज्ञशालां प्रकल्पयेत्।।

हस्तैकादशविस्तारं चतुरश्रं समन्ततः।
कूटागारं प्रपां वापि यमोत्सेधस्थलान्विताम्।।

तन्मध्ये च चतुर्दिक्षु विस्तारात् सर्वतः समाम्।
अरत्निमात्रमुत्सेधां कुर्याच्छयनवेदिकाम्।।

शालायाः परितः कुर्यादग्निकुण्डानि पञ्च हि।
ऐशान्ये यज्ञशालायां श्वभ्रं च परिकल्पयेत्।।

पूर्वेद्युरपराह्णे च स्थापनादिवसात्क्रमात्।
यज्ञशालामलङ्कुर्यात् सपताकां वितानकैः।।

मुक्तादामादिकैरन्यैर्यथा स्याच्छुभदर्शनम्।
तोरणानि च तत्रैव स्थापयेच्च चतुर्दिशम्।।

दर्भमालाभिरावेष्ट्य गोमयेनोपलेपयेत्।

**य. १२. २, ३**

[ यागशालायां भित्तिविस्तारमानेन शय्यावेदिं कृत्वा सभ्यस्य प्राच्यां श्वभ्रस्य कल्पनमधिकतया निर्दिश्यत इति विशेषः। ]

**खि. ११ . ७ - १०**

आलयात्पुरतो वापि दक्षिणे वा प्रपां चरेत्।।

यागशालां तत्र कुर्याद्द्वादशस्तम्भसंयुताम्।
आर्द्रपर्णैरलङ्कृत्य दर्भमालासमन्विताम्।
यथाशक्ति त्वलङ्कारं कारयेत्तु विचक्षणः।।
तस्यालयस्योत्तरतः प्रपां कुर्याद्विलक्षणाम्।
चतुर्दिशं चतुर्हस्तं चतुःस्तम्भसमन्विताम्।।

कूटं प्रपां वा कुर्वीत आर्द्रपर्णैस्समायुताम्।

पञ्चवर्णैरलङ्कुर्याद् भूमिं पैष्ट्या च सर्वतः।।

**वि. १८ . ८३**

आलयात्प्रमुखे दक्षिणे वा यागशालां तोरणाद्यैरलङ्कृत्य, तन्मध्ये शय्यावेदिं तद्भित्तिसमायामविस्तारां तुरीयांशोत्सेधां कृत्वा, तां परितः सभ्यादि-पञ्चाग्निकुण्डानि कृत्वा।

## ४.१८.१९ शूलस्थापनाङ्गहोमविधानम्

**खि. ११ . १० - १७**

कुण्डं श्रामणकं कुर्यात्तन्मध्ये[1] विधिपूर्वकम् ।।

आघारं विधिवत्कृत्वा मेदिन्याद्यैर्हुनेत्क्रमात्।
पर्यग्निञ्चैव कृत्वा तु गर्भगेहादिषु क्रमात्।।

शूलस्य च तथा कृत्वा पश्चादग्निं विसृज्य च ।
पञ्चगव्यैस्समभ्युक्ष्य पुण्याहमपि वाचयेत्।।

पश्चादग्निं समासाद्य परिषिच्य च पावकम्।
'ये ते शतादि' मन्त्रान्तं हुत्वा तत्र यथाक्रमम्।।

अन्तहोमं च कृत्वा तु ऋत्विजश्चापि पूजयेत्।
मध्ये तु यागशालायां शयनं सम्प्रकल्पयेत्।।

शय्यायाः पूर्वभागे तु सभ्यं कृत्वाग्निमादरात्।
सभ्याग्नेः पूर्वतः कुर्यात्कुण्डमाहवनीयकम्।।

दक्षिणेऽन्वाहार्यकुण्डं गार्हपत्यञ्च वारुणे।
उत्तरे चावसत्थ्याग्निं शास्त्रोक्तविधिना चरेत्।।

कुण्डान्येवं प्रकल्प्यैव आघारं विधिवच्चरेत्।

---

1 प्रपामध्ये कूटमध्ये वा।

आघारान्ते च जुहुयात् वैष्णवं तत्र तत्र तु।।

**ज्ञा. ४४ .७७ - ७८**

एवं कृत्वा प्राकाराद् बहिरुत्तरे भूमियज्ञं तथा हुत्वा प्राच्यादिमध्यपर्यन्तं पञ्चस्वाहवनीयादीन् पूर्ववत् स्थापयेत्।

आघारस्थानानि अथैषां संस्थानं लोकाः। तस्मात् चतुरश्रमाहवनीयं स्वर्गलोकमिति औपासनविधानेन। चन्द्रार्धाकृतिमन्वाहार्यमन्तरिक्षलोकमिति ऊर्ध्ववेद्यां दक्षिणोत्तरंद्वाविंशत् प्राक्प्रतीच्यन्तरं षष्टिरेवं द्विवेदिसहितं विस्तारोत्सेधं भागं रसनिम्नमेवं कारयेत्। गार्हपत्यं पूर्णचन्द्राकृतिं भूलोकमिति ऊर्ध्ववेदि षट्त्रिंशदङ्गुलं समम्। आवसथ्यं त्रिकोणं महर्लोकमिति ऊर्ध्ववेद्येकभुजं षड्यवाधिक- मष्टचत्वारिंशदेवं त्रिभुजं द्विवेदिसहितम्। सभ्यं चतुरश्रं जनो लोकमिति। श्रामणाकाग्निकुण्डं ब्रह्मसोमपितृस्थानसमन्वितं विधिना कारयेत्। एतेषामाघारे महाप्रतिष्ठायां यथोक्तस्तथा पृथक् पृथक् भेदेनैव आघारं हुत्वा, आहवनीये दौवारिकं गारुडं वैघ्नं नागराज-ध्वाज- रव- महाभूतदैवत्यं, अन्वाहार्ये इन्द्राग्नियमगुहहवीरक्षकदुर्गामन्त्रैः, गार्हपत्ये नीलवरुणवायुरोहिणी- मातृपुष्परक्षकदैवत्यं, आवसथ्ये कुबेरेशानादित्यबलिरक्षकसरस्वतीदैवत्यं, सभ्ये वैष्णवं सर्वदैवत्यं जुहुयात्। ब्राह्मं श्रीभूमिदैवत्यं, गारुडं वैष्वक्सेनमार्षं पारमात्मिकमोङ्कारादीन् क्रमेणाग्न्यास्ये जुहोति।

**वि. १८ . ८३**

पूर्ववदालयादुत्तरे वास्तुहोमं हुत्वा, पर्यग्निपञ्चगव्याभ्यां संशोध्य अग्निकुण्डेषु आघारं हुत्वा।

**स. १७ . ८**

तस्यां रात्रौ प्रदोषे च वास्तुहोमं च कारयेत्।

## ४.१८.२० शूलानां संस्कारपूर्वकं शायनम्

### स. १७ . ९ - २०

ततः पुरस्ताच्छ्वभ्रस्य कलशान् सप्त विन्यसेत्।
धान्यवेद्यां विधानं च श्वभ्रं चापि समर्चयेत्।।

श्वभ्रस्य दक्षिणे पार्श्वे चतुस्तालं समन्ततः।
धान्यवेदिं च सङ्कल्प्य दर्भांस्तत्र समास्तरेत्।।

आस्तीर्याहतवस्त्राणि शूलानादाय चादरात्।
बालागारात्ततो देवं स्वस्तिसूक्तं समुच्चरन्।।

श्वभ्रे संस्थापयेत्तत्र प्रतद्विष्णुरिति ब्रुवन्।
शूलांश्चापि तथा नीत्वा सर्वान् लक्षणतः कृतान्।।

क्षीरप्रक्षालितान् कृत्वा तैलेनाभ्यज्य वै ततः।
असङ्कुलान् समादाय देवीं शूलैः समं क्रमात्।।

गायत्रीं वैष्णवीं जप्त्वा तेषु वस्त्रेषु विन्यसेत्।
विपर्यासो यथा न स्यात् तथा स्थापनमाचरेत्।।

स्नापयेत्कलशैर्देवांश्चतुर्भिर्दशभिर्युतैः।
स्नापयित्वा क्रमेणैव तच्छिष्टैरेव वारिभिः।।
प्रोक्षयेदपि शूलांश्च तत्तद्देव्योरथान्तरे ।
श्वभ्राद्देवं समुत्थाप्य पीठे शुद्धाम्बरेण तु।।

परिधाय समभ्यर्च्य विग्रहैः षड्भिरव्ययम्।
शयनं सम्प्रकल्प्यैव शय्यावेद्यां विधानतः।
देवस्य दक्षिणे पार्श्वे शूलानां च तथैव च ।।

वस्त्रैश्च शयनं कृत्वा देवं शूलैः सहानयेत्।।

ततः प्रतिसरं बध्वा शूलानां च प्रकोष्ठके।
शाययेत् सहशूलांश्च यद्वैष्णवमिति ब्रुवन्।।

उत्तरच्छदवस्त्रैश्च शाययित्वा ततो बुधः।

**खि. ११ . १८ - २८**

तरुणालयगं देवम् अर्चयित्वा विधानतः।
तस्मिन् काले तु विधिवत्कुम्भपूजनमाचरेत्।।

तञ्च देवस्याभिमुखे धान्यपीठे च विन्यसेत्।
देवमावाहयेत्तस्मिन् विष्णुसूक्तं समुच्चरन्।।

देवं श्वभ्रे ततो न्यस्येत् कुम्भं तद्दक्षिणे न्यसेत्।
(देवं कुम्भं समादाय विमानाभिमुखे ततः)।
कुम्भस्य दक्षिणे भागे धान्यराशिं प्रकल्प्य च।।

पश्चाच्छूलं समादाय धान्यपीठे न्यसेद्धरेः।
श्रीभूमी तु समुद्दिश्य शूले उक्ते स्थले न्यसेत्।।

मार्कण्डेयं समुद्दिश्य न्यसेच्छूलं तदा पृथक्।
अन्येषामपि चोद्दिष्टदेवानामेवमाचरेत्।।

तैलेनाभ्यज्य शूलानि शास्त्रोक्तविधिना बुधः।
दर्भानुपरि संस्तीर्य तथा पुष्पैरथाक्षतैः।।

कलशैः स्नापयेद्देवमन्यान् द्वादशभिः क्रमात्।
कुम्भं शूलानि च प्रोक्ष्य प्रतिद्रव्यं विशेषतः।।

अग्न्यालयाद्दक्षिणतः शयनं सम्प्रकल्पयेत्।
शूलान्युद्दिश्य यत्नेन धान्यराशिं प्रकल्प्य च।।

देवेशशूलमादाय शयने सम्प्रवेशयेत्।
शयने शायितं शूलं पाद्याद्यर्घ्यान्तमर्चयेत्।।

ताम्बूलं च निवेद्यैव पुण्याहं वाचयेत्ततः।
बद्ध्वा ततः प्रतिसरं शयने शाययेद्धरिम्।।

शाययित्वा तथा शूलमुत्तराच्छादनं चरेत्।

**वि. १८ . ८३ , ८४**

शय्यावेद्यां ऐशान्यां द्विहस्तायतविस्तारां भागोन्नतां धान्यवेदिं कृत्वा उत्तराग्रान् दर्भानास्तीर्य वस्त्रोपरि बेरशूलान् संन्यस्य ---------------------- ------------------ असङ्करार्थं चिह्नं कृत्वा शुद्धोदकैः पवमानैः (नाद्यैः) प्रक्षाल्य, धान्यवेद्यां विष्णुगायत्र्या शूलान्विन्यस्य 'वसोः पवित्र' मिति पञ्चगव्यैः समभ्युक्ष्य 'शन्नो देवी' रिति गव्येन पयसा प्रक्षाल्य तैलाभ्यञ्जनं कृत्वा, देव्यादीनामेवमेव कृत्वा, तत्प्राच्यां दण्डवेद्यां यथाविधि चतुर्दशकलशान्विन्यस्य, तत्तद्द्रव्यैः सोपस्नानैश्शूलान् समभ्युक्ष्य देव्यादीनां पृथक्पृथगेवं कारयित्वा, शय्यावेद्यां धान्योपरि पञ्चशयनानि पञ्चवस्त्राणि वाऽऽस्तीर्य, शूलान् स्वस्तिसूक्तेनाऽसङ्कुलानारोप्य, तन्मध्ये वंशदण्डं तत्पार्श्वयोः पार्श्वदण्डौ, तदूर्ध्वे वक्षोदण्डं तदधस्तात् कटिदण्डं च संन्यस्य अथवा वंशदण्डेन एतान् संयोज्य संन्यसेदिति केचित्।

तद्दक्षिणपार्श्वे दक्षिणाङ्गानि वामपार्श्वे वामाङ्गानि संन्यस्य यद्दिग्द्वारं तद्दिशि वंशदण्डाग्रं कृत्वा पुण्याहान्ते प्रकोष्ठदण्डे प्रतिसरं बध्वा 'अस्थिभ्यो नम'. इत्यभ्यर्च्य 'वैष्णव' मिति शूलान् शाययेत्। देव्यादीनां तत्तन्मन्त्रेण शाययित्वा उत्तराच्छादनं कृत्वा चतुर्दिक्षु चतुर्वेदानध्यापयेत्।

**य. १३ . ५ - १०**

**ज्ञा. ४३ . ७६ , ७७**

प्राजापत्ये मुहूर्ते अद्भिः प्रक्षाल्य पञ्चगव्यैः स्नापयित्वा 'नमो वरुणः शुद्ध' इति तैलेन शूलमालिप्य 'शन्नो देवीः' 'सोमो धेनु' मिति मध्वाज्यमिश्रमालिप्य 'भूः प्रपद्य' इति देवेशं नमस्कृत्य 'परं रहं' इति पीठादादाय 'प्रतद्विष्णुस्तवत' इति श्वभ्रमध्ये देवेशं संस्थाप्य विष्णोर्दक्षिणतः शूलं 'मधुवाता' इति मधुना प्रक्षाल्य 'स्वस्तिदावी' ति प्रोक्ष्य 'वसोः पवित्र' मिति पञ्चगव्यैः देवेशं संस्नाप्य तत्रावशिष्टगव्यैः 'आपो हिष्ठे' ति तत् शूलं प्रोक्ष्य पश्चाद्देवेशं क्षीरघृतमधुसिद्धार्थोदकाक्षतोद-ककुशोदकगन्धोदकैः 'शन्नो देवीरग्न आयाह्यग्निमीले पूतस्तस्येमा ओषधयोऽभित्वा शूर चत्वारि वागि' ति संस्नाप्य 'आप्यायस्वे' ति पुनस्संस्नाप्य वस्त्रोत्तरीयचित्रकक्ष्या (था?) भरणादिभिरलङ्कृत्याभ्यर्च्य शूलमपि सहस्रशीर्षादिना अग्रे एकाक्षरादिना मध्ये विष्णोर्नुकादिना अधस्तादभिमृश्य यवसर्षपमिश्रेण चन्दनेन आलिप्य देववत् ध्वात्वा स्थापकान् वस्त्रोत्तरीयाभरणादिभिरलङ्कुर्यात्। ततो देवेशं प्रणम्याभ्यर्च्य पायसादीन् निवेद्य दक्षिणां दत्वा मूलागारस्य दक्षिणे यमपावकयोरन्तरे देवेशं संस्थाप्य तस्य दक्षिणे शूलं पुण्याहं वाचयित्वा 'स्वस्तिदा' इति प्रतिसरं बध्नीयात्। शूलमपि तथा कृत्वा बैल्वशयने अण्डजादीनास्तीर्य 'यद्वैष्णव' मिति प्राक्शिरः शाययीत। श्रीवृक्षफलके शूलं सोत्तरच्छदं शाययेदिति विज्ञायते।

**४.१८.२१ शूलानां शायनादूर्ध्वं होमविधानम्**

**खि. ११. २८ - ३४**

पश्चाद्धोतारमाहूय पूजयित्वा विधानतः।।

हौत्रं प्रशंस्य विधिना देवानावाहयेत्क्रमात्।

चतुर्मूर्तिविधानेन सर्वत्रावाहनं चरेत्।।

आवाहनक्रमेणैव चतुर्थ्यन्तक्रमेण च ।
जुष्टाकारं ततः कुर्यात्तत्क्रमेणाहुतीर्यजेत्।।

हुत्वा तु सर्वदेवत्यं पारमात्मिकसंयुतम्।
जुहुयात्पौरुषं सूक्तं प्राच्यामाहवनीयके।।
अन्वाहार्ये च जुहुयाद्विष्णुसूक्तमतः परम्।
गार्हपत्ये च जुहुयात् ब्राह्मं वैष्णवमेव च ।।
आवसत्थ्ये च जुहुयाद्रुद्रसूक्तं विशेषतः।।
देवेशं मनसा ध्यात्वा प्रत्येकञ्चैकविंशतिम्।।

व्याहृत्यन्तं च हुत्वा तु रात्रिशेषं व्यपोहयेत्।

--------------------------------

**स. १७ . २० - २९**

---------------------ततो[1] बुधः।
पञ्चानामप्यथाग्नीनामाघारं जुहुयुः क्रमात्।।
आघारानन्तरं सभ्ये यजेद् व्याहृतिवैष्णवम्।
उपजुह्वा च तां हुत्वा जुहुयाच्चरुणा बुधः।।

पुरस्तादेव सभ्यस्य तिष्ठन् हौत्रं प्रशंसयेत्।
पश्चादावाहयेद्देवं मूर्तिमन्त्रैर्यथाक्रमम्।।

सभ्याग्नौ तत्क्रमेणैव समावाह्य विधानवित्।
निर्वापं च ततः कृत्वा तत्क्रमेणाहुतीर्यजेत्।।

---

1 शूलशायनानन्तरम्।

तथैवाहवनीयाग्नौ वैष्णवं चैन्द्रमेव च।
आग्नेयं पौरुषं सूक्तं क्रमेण जुहुयात्ततः।।

अन्वाहार्ये यजेद्याम्यं विष्णुसूक्तं च नैर्ऋतम्।
वारुणं गार्हपत्ये च वैष्णवं मारुतं तथा।।

आवसथ्ये तु कौबेरमैशं सौरं च तत्र वै।
मिन्दाहुतिं च जुहुयात् जुत्वा चं विधिवत् क्रमात्।।

जुहुयाच्च पुनः सभ्ये विष्णुसूक्तं च वैष्णवम्।
ईङ्कारादींस्ततो हुत्वा वैष्वक्सेनं च गारुडम्।।

सौदर्शनं च हुत्वा तु तमग्निं परिषेचयेत्।
अन्तहोमं ततो हुत्वा अन्यानग्नीन्विसृज्य च ।।

नृत्यैर्गेयैश्च वाद्यैश्च रात्रिशेषं नयेत्ततः।

**वि. १८. ८४**

सभ्याग्निं परिस्तीर्य, हौत्रं प्रशंस्याऽऽहवनीयादीनि कृत्वा, वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तम्, आत्वाहार्षादीन् श्रीदेवत्यं भूमिदेवत्यं च हुत्वा 'अस्थिभ्यः स्वाहे' ति अष्टोत्तरशतमावर्त्य हुत्वा सर्वदेवत्यं च हुत्वा, आहवनीयादिषु पूर्ववद्धोमं हुत्वा सभ्यं विनान्तहोमं जुहुयात्। अथवा सभ्याग्निमेकमेव कारयेदित्येके। रात्रिशेषं व्यपोह्य,

**य. १३ . १० - १३**

## ४.१८.२२ ध्रुवबेरपीठे रत्नन्यासार्थं श्वभ्रकल्पनम्

**ज्ञा. ४४ . ७८**

प्रभाते स्नात्वा मृष्टसिक्तोपलेपनाद्यैः देवतागारं संशोध्य ध्वजपताकापुष्पदामधूपदीपादिभिरलङ्कृत्य शयनस्थं देवं सम्प्रणम्याभ्यन्तरं विभज्य

किञ्चिन्मानुषमाश्रित्य दैविकस्थाने स्थानकस्य, आसनं चेद् ब्रह्मसूत्राद्वामे, शयनं दैवमानुषयोर्मध्ये श्वभ्रं भागावगाढं षोडशाङ्गुलावगाढं वा द्विगुणविस्तृतं चतुरश्रं समुपकल्प्य कारयेत्।

### ४.१८.२३ स्थानकमृण्मयध्रुवबेरस्य पीठमानम्

**प्र. ८ . १०४ - १०६**

भुवङ्गस्य समं प्रोक्तं स्थानके पीठकोन्नतम्।।

भुवङ्गोपरि तालं स्यात् ध्रुवपीठस्य चोन्नतिः।
ध्रुवबेरस्य पादस्य प्रतिदिक् चतुरङ्गुलम्।।

विस्तारमूर्ध्ववेद्यास्तु पद्मपत्रदलैर्युतम्।
मण्डलं चतुरश्रं वा पीठं कुर्यात्तदर्हकम्।।

### ४.१८.२४ आसनमृण्मयध्रुवबेरस्य पीठमानम्

**प्र. ८ . १०९ - १११**

एवं सम्यग्विदित्वैवमासने च प्रवक्ष्यते।
ध्रुवबेरं तथा कृत्वा चोर्ध्वं सिंहासनोच्छ्रयम्।।

तदर्हविस्तृतं प्रोक्तमुपधानेन संयुतम्।
पादाश्रयेण पीठेन पद्माकारौ ? च संयुतम्।।

यथा सौन्दर्यकं कृत्वा शेषं युक्त्या समाचरेत्।

### ४.१८.२५ शयनमृण्मयध्रुवबेरस्य पीठमानम्

**प्र. ८ . १११ - ११५**

बेरायामं चतुर्भागं शयनोच्छ्रायमुच्यते।।

तत्तुरीयांशकोत्सेधं शिरोभागे विशेषतः।
पादयोरुभयोश्चैव समं तत्रैवमूह्य च ।।

शेषभोगं त्रिरावेष्ट्य पञ्चवर्णसमायुतम्।
अधः पुच्छं शिरश्चोर्ध्वं सर्पदेहे तु वेष्टिते।।

तदुत्सङ्गगतं देवं शयानं सम्प्रचक्षते।
फणानां पञ्चकं कुर्यात् विषवेगसमन्वितम्।।

एवमेव प्रकुर्वीत स्थानासनशयानकान्।
पीठं कृत्वा प्रयत्नेन ------------।।

**४.१८.२६ मृण्मयध्रुवबेराणां गर्भगृहे स्थापनस्थानानि**

**खि. ११. ३४ - ४१**

पुनः प्रभाते धर्मात्मा यजमानयुतो गुरुः।।

स्नात्वा स्नानविधानेन सूक्तानि च जपेत्क्रमात्।
गर्भालयं सम्प्रविश्य पदानि परिकल्पयेत्।।

सप्तभिर्दशभिः सूत्रैः कृतैः प्रागुत्तरैः क्रमात्।
षट्पञ्चाशद्युतशतद्वयभक्तपदेषु वै।।

मध्ये पदानि दश षट् ब्रह्मस्थानं प्रचक्षते।
ब्रह्मस्थानस्य परितो दैविको भाग उच्यते।।

भागाधिकाशीतिभागा बहिरावरणत्रिके।
तद्बाह्ये मानुषं स्थानं नवतिः षट् पदानि तु।।

स्यातां द्व्येकावृती चैव नारपैशाचनामनी।
षष्टिः पदानां पैशाचे भित्तिमाश्रित्य सूत्रिताः।।

दैविकं च त्रिधा कृत्वा द्विभागं प्राग्व्यपोह्य च।
पश्चिमे स्थानकं कुर्यादथ भागद्वयेऽपि वा।।

दैविकेनैव संयुक्ते मानुषे चासनं भवेत्।
देवमानुषभागाभ्यामन्तरे शयनं चरेत्।।

**प्र. ८ . १०७ - १०८**

दैविकं तु त्रिधा कृत्वा द्विभागं पुरतस्त्यजेत्।
अपरे स्थानकं स्थाप्य मध्यभागेऽथवा पुनः।।

देवमानुषयोर्मध्ये वाऽसनं सम्प्रकल्पयेत्।
किञ्चिद्दैविकसंयुक्ते मानुषे शयनं स्मृतम्।।

**४.१८.२७ मृण्मयध्रुवबेरपीठे रत्नन्यासार्थं पदकल्पनम्**

**खि. ११. ४२ - ४६**

रत्नन्यासविधावत्र स्थाननिर्णय उच्यते।
रत्नन्यासं तले कुर्यात् गर्भगेहे विचक्षणः।।

द्वादशाङ्गुलविस्तीर्णां भागोन्नतियुतां तथा।
चतुरश्रां वर्तुलां वा समां कृत्वा शिलां बुधः।।

ध्रुवस्थाने न्यसेत्तत्र गर्भगेहतले समम्।
एवं शिलातले कृत्वा पञ्चविंशत्पदानि वै।।

मध्ये तु ब्रह्मभागः स्यात्तद्बाह्ये मङ्गलाष्टकम्।
तद्बाह्ये तु दिगीशानां साध्यादीनां पदं ततः।।

एवं पदानि सङ्कल्प्य रत्नन्यासं समाचरेत्।

**४.१८.२८ स्थानकमृण्मयध्रुवबेरपीठे रत्नन्यासः**

**वि. १५ . ७३**

स्थानकस्य पीठोर्ध्वे --------------- रत्नन्यासं कृत्वा बेरं संस्थापयेदित्याह मरीचिः।

**४.१८.२९ आसनमृण्मयध्रुवबेरपीठे रत्नन्यासः**

**वि. १५ . ७३**

आसीनस्य सिंहासनोर्ध्वे, तस्याऽधस्ताद्वा -------- रत्नन्यासं कृत्वा बेरं संस्थापयेदित्याह मरीचिः।

**४.१८.३० शयानमृण्मयध्रुवबेरपीठे रत्नन्यासः**

**वि. १५ . ७३**

शयानस्याऽनन्तोर्ध्वे, पादपार्श्वे बेरमध्ये वा रत्नन्यासं कृत्वा बेरं संस्थापयेदित्याह मरीचिः।

**४.१८.३१ स्थानकमृण्मयध्रुवबेरपीठे [1]रत्नादिन्यासप्रकारः**

**खि. ११ . ४६ - ७७**

गर्भालयं तु संशोध्य प्रोक्षणैः प्रोक्षणं चरेत्।।

रत्नानि धातून् बीजानि मङ्गलानि विशेषतः।
आहृत्य प्रोक्ष्य सौवर्णे राजते कांस्य एव वा।।

पात्रे सम्भृत्य यत्नेन धान्यराशिं प्रपूर्य च ।
तद्राश्युपरि संस्तीर्य तण्डुलांस्तण्डुलोपरि।।
पद्ममष्टदलं कृत्वा पात्रं तस्योपरि न्यसेत्।
उत्तराभिमुखो भूत्वा आचार्यः सुसमाहितः।।

ब्राह्ममासनमास्थाय पीठे वाऽपि पदं चरेत्।
रत्नादीन् सर्वसम्भारान् 'तमेके' त्यभिमन्त्रयेत्।।

पूर्वोक्तेनैव मन्त्रेण ब्रह्मस्थाने गजं क्षिपेत्।

---

1 आदिपदेन धातु - बीज - अष्टमङ्गल - आयुध - यज्ञभाण्ड-कूर्मचिह्नानि ग्राह्याणि ।

'शतधारं' मनुं जप्त्वा तत्रैव गरुडं क्षिपेत्।।

ब्रह्मस्थाने ब्रह्ममणिं 'ब्रह्मा देवादि' मुच्चरन्।
'इन्द्रं प्रणवन्त' मिति ऐन्द्रे वज्रमणिं ततः।।

'अग्नावग्निरि' त्याग्नेय्यां मौक्तिकं प्रक्षिपेत्ततः।
'यमो दाधार' इत्युक्त्वा याम्ये वैदूर्यकं न्यसेत्।।

'वसवः प्रथमः' प्रोच्य नैर्ऋत्यां शङ्खजं न्यसेत्।
'ये ते शत' मिति स्फटिकं वारुण्यां दिशि निक्षिपेत्।।

'मरुतः परमात्मे' ति तथा वायव्यां पुष्यकं न्यसेत्।
'सोमं राजानमि' त्युक्त्वा चन्द्रकान्तस्तु सौम्यके।।

'ईशानः सर्व' मन्त्रेण चैशान्यां नीलमाक्षिपेत्।
एवंक्रमेण निक्षिप्य पदेष्वैन्द्रादिषु क्रमात्।।

'शन्नो निधत्ता' मित्युक्त्वा वासुकेरमृताश्मकम्।
ब्रह्मभागे न्यसेद्विद्वान् साध्यादिभ्यस्ततः परम्।।

'धाता धातृणा' मिति च साध्येभ्यो लोहिताश्मकम्।
'विश्वे देवस्य' इत्युक्त्वा विश्वेभ्यश्चोत्पलं मणिम्।।

'अधिब्रह्मेति' च न्यसेत्सिद्धानान्तु प्रवालकम्।
'इमां मूर्धन्या' इत्युक्त्वा गन्धर्वेभ्यो मनशिशलाम्।।

'अप्सरस्सु' ब्रुवन् विद्वानप्सरोभ्योऽथ शुक्तिजम्।
'यं काद्रवेया' इत्युक्त्वा नागेभ्यो विमलं मणिम्।।

'अर्यम्णः कुम्भी' ति तथा अर्यम्णे च प्रवालकम्।

'तत् त्रीण्येषे' ति च ददेद् भूतेभ्यो नीलमुत्तमम्।।

इन्द्राग्न्योरन्तरालादिपदेष्वेवं न्यसेत्क्रमात्।
सौवर्णं गैरिकं चैव हरितालं मनश्शिलाम्।।

अञ्जनञ्चैव श्यामञ्च कासीसं पारदं तथा।
सौराष्ट्रकं तथा चैव गोरोचनमतः परम्।।

मध्ये ब्रह्माणमारभ्य ईशानान्तमनुक्रमात्।
'ब्रह्मा देवा' दिभिर्मन्त्रैर्न्यसेद्विद्वान् पृथक् पृथक्।।

ततस्सर्वाणि बीजानि सर्वगन्धयुतानि च।
तथा कुलुत्थमाषौ च मुद्गं गोधूमकं पुनः।।

तिलतिल्वौ समादाय यववंशयवौ तथा।
नीवारं च प्रियङ्गुं च गोधूमयवकौ तथा।।

बीजानीत्थं पूर्वमुक्तमन्त्रैर्मध्यादि विन्यसेत्।
'भूयाम वृत्या ' इत्युक्त्वा ऐन्द्रे श्रीवत्समर्पयेत्।।

'नमस्सुलोम' मन्त्रेणाग्नेय्यां सन्न्यसेद् घटम्।
'स एकोऽभू' दिति जपन् याम्ये भेरीं तथा न्यसेत्।।

आदर्शञ्चैव नैर्ऋत्यां 'देवस्य त्वे' ति मन्त्रतः।
वारुणे मत्स्ययुग्मन्तु 'अतो देवदिना न्यसेत्।।

'क्ष्मामेका ' मिति मन्त्रेण वायुस्थानेऽङ्कुशं न्यसेत्।
'तन्मा यशोऽग्र' इत्युक्त्वा शङ्खं सौम्ये तथा न्यसेत्।।

'ब्रह्मा देवाना' मिति न्यसेदावर्तञ्च त्रियम्बके।

ब्रह्माभिमुखमेवन्तु मध्यमावरणे न्यसेत्।।

अष्टमङ्गलविन्यास एवमैन्द्रादिषु स्मृतः।
गदां शङ्खमसिं चक्रं शरं श्वभ्रे च दक्षिणे।।

'भूमाननोऽग्र' इत्युक्त्वा सन्न्यसेत्तु पृथक् पृथक्।
वामभागे तथा शङ्खं शाङ्र्खं खेटकमेव च ।।

'तन्मा यशोऽग्र' इत्युक्त्वा सन्न्यसेत्तु पृथक् पृथक्।

ब्राह्मणानां हितार्थन्तु स्रुक्स्रुवौ च कमण्डलुम्।।

अन्यानि यज्ञभाण्डानि सुवर्णेन कृतानि वै।
'ब्रह्म प्रतिष्ठा' इत्युक्त्वा स्थापयेद् ब्रह्मभागके।।

वर्णानां चैव सर्वेषां तच्चिह्नानि पृथक् ददेत्।
'प्रजापतिं प्रथम'मिति मध्ये कूर्मन्तु विन्यसेत्।।

एवं स्थानक उद्दिष्टम् ----------------।

**स. १८ . ४७ - ५४**

[ अत्र रत्नानि 'स्पर्शयेच्छूलं यथार्हं स्थापयेत्तथा' इत्यधिकम्। ]

**४.१८.३२ आसनमृण्मयध्रुवबेरस्य पीठे रत्नन्यासप्रकारः**

**स. १८ . ५४ - ५५**

------------- आसने तु प्रवक्ष्यते।।

सिंहासने प्रकुर्वीत रत्नन्यासं पदे क्रमात्।
रत्नानि स्पर्शयेच्छूलं तथा तत्रापि कल्पयेत्।।

**खि. ११ . ७७**

**४.१८.३३ शयानमृण्मयध्रुवबेरस्य पीठे रत्नन्यासप्रकारः**

**खि. ११ . ७८- ८४**

शयने देवदेवस्य पादपार्श्वे शिलां न्यसेत्।
पादस्पर्शो भवेद्यत्र तत्र रत्नानि सन्न्यसेत्।।

स्थानके चासने वापि यथार्हं शयने यथा।
शूलं स्पृशन्ति रत्नानि यथा संस्थापयेत्तथा।।

यथायुक्ति प्रकुर्वीत रत्नन्यासं समन्त्रकम्।
रत्नानि प्राणवद् ध्यात्वा तथा धातूनि धातुवत्।।

बीजानि चेन्द्रियाणीव न्यसेत्तस्मात् त्रयं बुधाः।
श्रीरूपञ्च श्रियः स्थाने पञ्चरत्नैस्समन्वितम्।।

मंहीरूपं महीस्थाने रत्नपञ्चकसंयुतम्।
मुनीनामृद्धिमन्विच्छन् अक्षमालां कमण्डलुम्।।

सुवर्णेनैव कृत्वा तु मुन्योर्वै स्थानयोः क्षिपेत्।
तत्तन्मन्त्रं समुच्चार्य रत्नन्यासं समाचरेत्।।

तत्काले यजमानस्तु विधिना पूजयेद्गुरुम्।
ऋत्विजश्च सुसम्पूज्य नमस्कृत्य च दैववत्।।

**स. १८ . ५६ - ५७**

**वि. १८. ८४**

प्रभाते स्नात्वा, आलयं प्रविश्य, गर्भालये पदविभागं कृत्वा, तद्योग्यपदे पीठे रत्नानि विन्यसेत्।यजमान आचार्यादिभ्यो दक्षिणां दद्यात्। अग्निं विसृज्य।

## ४.१८.३४ स्थानकादिमृण्मयध्रुवबेरपीठे [1]रत्नादिन्यासप्रकारः

ज्ञा. ४५. ७९

ज्ञा. ४६ . ८०

साक्षतोदकैः पञ्चगव्यैः प्रोक्ष्य गोमयेनोपलिप्य श्वभ्रमध्ये अधोभागे गजं 'तमेकनेमि' मिति 'ब्रह्मा देवाना' मिति ब्रह्मस्थाने ब्रह्ममणिं 'इन्द्रं प्रणवन्त' मितीन्द्रस्थाने इन्द्राय हरितालवज्रे 'अग्नावग्नि' रित्यग्निस्थाने मनश्शिलामौक्तिकौ 'यमो दाधार नमस्त' इति यमस्थाने अञ्जनवैडूर्यौ 'वसवः प्रथम' इति निर्ऋतिस्थाने श्यामशङ्खजौ 'ये ते शत' मिति वरुणस्थाने कासीसस्फटिकौ 'मरुतः परमात्मे' ति वायुस्थाने पारदपुष्यकान्तौ 'सोमं राजान' मिति सोमस्थाने सौराष्ट्रचन्द्रकान्तौ 'ईशान-ईश-ईशित्र' इति ईशस्थाने गोरोचननीलाविति 'शन्नो निधत्ता'मिति मध्ये वासुकेरमृताश्मकं 'धाता धातृणामि' ति पावकेन्द्रयोरन्तरे साध्येभ्यो लोहिताश्मकं 'विश्वे देवस्ये' ति यमाग्न्योरन्तरे विश्वेभ्यो देवेभ्यश्चोत्पलमणिं 'अधिब्रह्मा यतता' मिति यमनीलयोरन्तरे सिद्धेभ्यः प्रवालकं 'इमां मूर्धन्या' इति नीलवरुणयोरन्तरे गन्धर्वेभ्यो मनश्शिलां 'अप्सरस्विति' वरुणवाय्वन्तरे अप्सरोभ्यः शुक्तिजं 'यं काद्रवेया' इति वायुसोमयोरन्तरे नागेभ्यो विमलमणिं 'अर्यम्णः कुम्भीति' धनदेशानयोरन्तरे अर्यम्णः प्रवालं 'तं त्रीण्ये' षेतीन्द्रेशान्योरन्तरे भूतेभ्यो नीलं तस्मादुपरि 'तमेकनेमि' मित्युपरि गरुडरूपं ब्रह्मस्थाने ब्रह्मणे सौवर्ण, गैरिकम् इन्द्राय, षष्टिकव्रीहियवौ, अग्नये कुलुत्थमाषौ, यमाय मुद्गगोधूमौ, निर्ऋतये तिलतिल्वौ, वरुणाय यववंशयवौ, वायवे नीवारप्रियङ्गू, सोमाय गोधूमयवौ, ईशानाय सर्वबीजानि तत्तन्मन्त्रेण पूर्ववन्निक्षिपेत्। 'तमेकनेमिम्' इत्युपरि कूर्मरूपं 'भूमाननोऽग्र' इति गदाचक्रासिशक्तिशरान्

1 आदिपदेन बीज - आयुध - मृत्तिका - श्रीरूप - वर्णचिह्नानि ग्राह्याणि।

दक्षिणपार्श्वे वामे 'तन्मा यशोऽग्र' इति शङ्खशार्ङ्गखेटकान् यथाक्रमं प्रतिष्ठापयति। श्रीवत्सपूर्णकुम्भभेर्यादर्शमत्स्ययुग्माङ्कुश-शङ्खावर्तानीत्यष्टमङ्गलानि इन्द्रादीशानपर्यन्तं यथाक्रमेण 'भूयाम वृत्त्या' 'नमस्सुलोमि' 'स एको भृत्' 'देवस्य त्वा' 'अतो देवाः' 'क्ष्मामेकां' 'तन्मा यशोऽग्रे' 'ब्रह्मा देवाना'मिति स्थापयेत्। सर्वरत्नसमन्वितं हाटकाम्बुजमध्ये कोलकोच्छ्रयं जातरूपमयं श्रीरूपं कृत्वा 'शं सा नियच्छ' त्विति द्वाराभिमुखं प्रतिष्ठाप्य अश्वत्थमूलशैलार्णवसरोवल्मीक-वृषशृङ्गगजदन्तजदर्भमूलगवां गोष्ठेषु मृदं सङ्गृह्य ब्रह्मादीनां यथाक्रमेण तत्तत्स्थाने तत्तन्मन्त्रेण विनिक्षिपेदिति। सरस्वतीयज्ञभाण्डस्रुक्स्रुवकमण्डलूनि सौवर्णेन वृद्ध्यर्थं ब्राह्मणानां, क्षत्रियाणां ध्वजशस्त्रायुधानि, वैश्यानां तुलातोदौ, शूद्राणां हलं सुवर्णेन कृत्वा 'हिरण्यरूप' इति स्थापयेदिति। मेघविद्युल्लतारूपौ कृत्वा राष्ट्राभिवृद्ध्यर्थं 'ये ते शत' मिति प्रतिष्ठापयेदिति। एवं कृत्वा प्रोक्षणैः प्रोक्ष्य श्वभ्रं वाससा आच्छादयेत्।

**खि. ११ . ७६**

[ तमेकनमिम् इत्यस्य स्थाने 'प्रजापतिं प्रथम' मिति दृश्यते। ]

**स. १८ . ५१**

**स. १७ . २९ - ३२**

अथाचार्यः प्रभाते तु स्नात्वा नित्यं समाप्य च।।

यजमानसमायुक्तो गर्भगेहं प्रविश्य च।

स्थापनं तत्र देवानां पदमुक्तं विचार्य च।।

पीठं च तमलङ्कुर्यादुक्तेनैव विधानतः।

प्रतिष्ठोक्तक्रमेणैव रत्नन्यासं समाचरेत्।।

आचार्यस्थापकादीनामृत्विजां दक्षिणां ददेत्।

**प्र. ८ . ११६ - ११९**

## ४.१८.३५ गर्भगृहे शूलस्थापनम्

### वि. १८ . ८४, ८५

मुहूर्ते समनुप्राप्ते शय्यावेदिमासाद्य, आचार्यः स्थापकैः सह शूलानसङ्करमाहृत्य शकुनसूक्तं समुच्चार्य, वाद्यघोषपुरस्सरं सर्वालङ्कारसंयुतम् आलयं प्रदक्षिणीकृत्याऽभ्यन्तरं प्रविश्य, विष्णुसूक्तं विष्णुगायत्रीं च जप्त्वा, ब्रह्मदण्डं स्थाप्य देव्यादीनां तत्तन्मन्त्रेण तत्तत्स्थाने स्थापयेत्। वंशवक्षः कटीपार्श्वोरुदण्डान् संस्थाप्य कटीदण्डाद्वक्षोदण्डादधस्ताच्च द्वयोराधारभित्तिमाश्रित्य पृष्ठतस्तथा योजयेत्।

### ज्ञा. ४२ . ७६; ४६. ८०

शूलानि प्रमाणयुक्तान्यादाय प्रोक्षणैः प्रोक्ष्य रात्रिसूक्तेनाभिमृश्य विष्णुगायत्र्या तत्तत्स्थाने संयोज्य स्थापयेदिति विज्ञायते।-------------------- ------------- हस्तपादतलौ कर्णौ ताम्रपत्रेण योजयेत्। न कीलबन्धैः । ------------------------------------------ --------------स्थापकान् वस्त्राभरणादिभिरलङ्कृत्य ओंकारजयशब्दैः तताद्यैराघोष्य 'प्रतद्विष्णुस्तवत' इति ब्राह्मे मुहूर्ते शूलं संस्थापयेत्। ध्रुवसूक्तं जपति। अविच्छिन्नं कनिक्रदादि जपन् सुदृढं सुस्थितम् अचलं स्थापयित्वा 'नमो वरुण' इति क्षीरेण क्षालयेत्। देव्योरप्युभयोः पार्श्वे तत्सूत्रे द्वियवान्तरे तत्रैव संस्थाप्य ब्रह्मकुड्यान्तरे किञ्चित् पश्चिममाश्रित्य ऋष्योः शूलं संस्थाप्य हिरण्येनोद्वर्त्य स्पृष्ट्वैव शूलं अतो देवादिसहस्रशीर्षाद्येकाक्षराद्यात्वाहार्षादिविष्णोर्नुकादीन् जप्त्वा।

### स. १७ . ३२ - ३७

शुभे मुहूर्ते सम्प्राप्ते शयनादुत्थितं हरिम्।।

शूलैः सार्धं समादाय द्वारपीठे च विन्न्यसेत्।
मन्दिराभिमुखं पश्चाच्छूलांश्च परितो हरेः।।

देवस्य देव्योः शूलांस्तां तत्तद्रूपांश्च कल्पयेत्।
तल्लिङ्गं मन्त्रमुच्चार्य गायत्रीं वैष्णवीं ब्रुवन्।।

स्थापयेद्देवदेवस्य शूलान् देव्योस्ततः क्रमात्।
वंशो वक्षस्तथा पार्श्वं प्रथमं योजयेत्क्रमात्।।

आधारदण्डयोः पश्चाच्छूलान् शिष्टान् प्रयोजयेत्।
पुण्याहं वाचयेत्काले सभ्यमग्निं विसर्जयेत्।।

बालागारे च तं देवं संस्थाप्य विधिनार्चयेत्।

**प्र. ८ . १२० - १२३**

[ अत्र शिल्पिनः सम्माननम् अधिकम्। ]

**खि. ११ . ८५ - ९३**

मुहूर्ते समनुप्राप्ते शयानं बेरमादरात्।
देवदेवं समुद्धृत्य पाद्याद्यैरभिपूजयेत्।।

सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम्।
धारयन् शिरसा कुम्भमाचार्यः पुरतो व्रजेत्।।

देवस्य च तथा देव्योर्मुन्योः शूलानि कौतुकम्।
आदाय धृत्वा हस्ताभ्यां व्रजेयुः स्थापका अनु।।

आचार्यः स्थापकाश्चैव प्रदक्षिणविधानतः।
यथाक्रमं समाहृत्य तिष्ठेयुश्च यथाक्रमम्।।

कुम्भेन सह शूलानि न्यस्य गर्भगृहान्तिके ।
मुहूर्ते समनुप्राप्ते विष्णुसूक्तं समुच्चरन्।।

ध्रुवसूक्तञ्च जप्त्वा वै स्थापयेयुरनुक्रमात्।
देवस्य कुड्ययोर्मध्ये देव्योस्स्थानं प्रकीर्तितम्।।

कुड्यकौतुकयोर्मध्ये मुन्योस्स्थानमुदीर्यते।
तत्तन्मन्त्रं समुच्चार्य तत्तच्छूलं सुसन्न्यसेत्।।

कुम्भं कौतुकमादाय बालागारं प्रविश्य वै।
ब्रह्मस्थाने प्रतिष्ठाप्य आवाहनमथाचरेत्।।

पुण्याहं वाच्य तत्काले यथोक्तविधिना गुरुः।
अर्चयित्वा यथान्याय्यं हविर्भिस्सन्निवेदयेत्।।

**य. १३ . १३ - १८**

स्नात्वा प्रभाते धर्मात्मा सुमुहूर्ते शुभोदये।।

शूलानादाय शिरसा गर्भगेहं प्रवेशयेत्।
रत्नोपरि कृते पीठे विष्णुसूक्तं जपन् गुरुः।।

स्थापयेद् ब्रह्मदण्डं च देव्यादीन् स्थापयेत्क्रमात्।
वंशदण्डं कटीपार्श्वे ऊरुदण्डं न्यसेत्क्रमात्।।

कटिदण्डादधस्ताच्च भित्यामाधारसंयुतम्।
सर्वं युक्त्यैव संस्थाप्य स्थानके शयनाऽसने।।

सार्धं स्थपतिना विद्वानचलं स्थापयेद्बुधः।
पुनस्सन्धेर्दृढार्थाय ताम्रपट्टेन बन्धयेत्।।

निरुक्तोक्ताष्टबन्धैश्च सार्धं रज्जुभिरेव च।
आवेष्ट्य ताम्रपत्रेण युक्त्या बुद्ध्या च कारयेत्।।

## ४.१८.३६ स्थानकमृण्मयध्रुवबेरस्य शूलस्थापनम्

### वि.१८ . ८३ - ८५

वंशवक्षःकटिदण्डास्त्रयः, पार्श्वदण्डौ द्वौ, बाहुदण्डाश्चत्वारः, प्रकोष्ठदण्डाश्च तथैव पाददण्डौ द्वौ, मौलिदण्ड एक एतेऽष्टादशदण्डाः स्थानके च ------------ स्थानके पाददण्डौ शिलोपरि दृढं संस्थाप्य तयोः कटिदण्डं वंशदण्डं च संस्थाप्य यावत् दृढतरं तावद्योग्यं शूलं कृत्वा युक्त्या समूह्य कारयेत्।

### प्र. ८ . ८० - ८७

स्थानादीनां क्रमाच्छूलसङ्घातं वक्ष्यतेऽपि च ।।

वंशदण्डं तथा वक्ष्ये दण्डं च कटिदण्डकम्।
जानुदण्डद्वयं चैव पाददण्डद्वयं तथा।।

बाहुदण्डाश्च चत्वारश्चत्वारश्च प्रकोष्ठकाः।
तथा चरणदण्डौ द्वौ दण्डाः सप्तदश स्मृताः।।

कटिदण्डार्धमारभ्य यावदासीन ------रपि।
तारः स्यात्पृष्ठफलका तारमूरौ च बन्धयेत्।।

कटिदण्डादधस्ताच्च वक्षो दण्डधरस्तथा( ?)।
योजयेदुपया नीलं ?पृष्ठतो वृत्तमेव वा।।

वंशदण्डं तथा तेन क्लेशयेद्विशिखेन तु।
शिखाग्रसुषिरे कीलं लोहं वा स्कामथापि वा।।

दाढ्यार्थं योजयेच्छूलं स्थितं वै शूलकर्मणि।
अन्यत्कीलं तु सुषिरं कर्तव्यं न कथञ्चन।।

एवं स्थानस्य सम्प्रोक्तं -----------।

**स. १९ . ५२ - ५७**

शूलाधारद्वयं कुर्यात् ताम्रनालसमायुतम्।।

खादिरं ताम्रदण्डं वा भित्तिस्थं सुदृढं चरेत्।
छिद्रं कृत्वा तदाधारे शूलं यन्त्रेण योजयेत्।।

ध्रुवं तद्योजयित्वैव बेरपृष्ठस्य मध्यमे।
तत्पृष्ठस्कन्धमध्ये च तदाधारे च योजयेत्।।

शूले छिद्रं न कर्त्तव्यं कुर्याच्चेत्स विनश्यति।
साश्रयौ शङ्खचक्रौ च कारयित्वा विचक्षणः।।

हस्तबन्धं च ताम्रेण कृत्वा मूलस्य पादयोः।
ताम्रनालं सुयोज्यैव ताम्रपत्रं तलेऽर्पयेत्।।
एवं स्थानकमुद्दिष्टम् --------------।।

**प्र. ९. ११ - १४**

### ४.१८.३७ आसनमृण्मयध्रुवबेरस्य शूलस्थापनम्

**प्र. ८ . ८७ - ९२**

------------ आसनस्य प्रवक्ष्यते।
मेढ्रमूलादधोमूलं नाहमष्टाङ्गुलं भवेत्।।

भागमासनमानस्य भागं श्वभ्रप्रवेशनम्।
मेढ्रसूत्रसमे सम्यक् शेषयेत्कटिदण्डकम्।।

कटिदण्डशिखा ह्यूरू दण्डमूलशिखानि च।
आसने शयने चैव जानुसन्धिः प्रशस्यते।।

एकोनविंशतिश्शूलदण्डानां तु समाकृतिः।
नेष्यते कोर्परे सन्धिशयने दण्डहस्तके।।

तस्मादथ दशप्रोक्ताः शूलसङ्ख्या चतुर्भुजे।
पञ्चान्ये द्विभुजे दण्ड दण्डा हस्ते चतुर्दश।।
दक्षिणे वक्षोदण्डस्यायतमेकादशाङ्गुलम्।।

**वि. १८ . ८३ , ८५**

आसने विंशतिदण्डाः ---------------------------------------

आसने वक्षोदण्डादधस्तादेकमाधारं योजयेत्। अथवा भित्तिशूलं मौलिबन्धे संयोज्याऽऽसने चाऽसनोपरि वंशदण्डं संस्थापयेत्।

**स. १९ . ५७**

--------------- आसनं तु प्रवक्ष्यते।
आसने चैकमाधारं पृष्ठस्कन्धे तु कारयेत्।।

**४.१८.३८ शयनमृण्मयध्रुवबेरस्य शूलस्थापनम्**

**प्र. ८ . ९२ - ९४**

शिखा पूर्ववदुद्दिष्टा बाहुमूलशिखान्विता।।

तयोरुपरि चाभोगं शाययेच्छास्त्रवित्तमः।
कटिदण्डद्वयादन्यत् स्थानस्योक्तवदाचरेत्।
उक्तं हि शयने ------------------

**वि. १८ . ८३ - ८५**

शयने चतुर्भुज एकोनविंशतिदण्डाः, द्विभुजे सप्तदशदण्डाः, मौलिदण्डस्सहजश्चेत् एकोनमेतांश्चैवं (सं) समाहृत्य असङ्करार्थं चिह्नं कृत्वा, शुद्धोदकैः पवमानैः (नाद्यैः) प्रक्षाल्य, धान्यवेद्यां

विष्णुगायत्र्या ---------------------------------- शयने स्थानकवत् द्वयोराधारं शयनोर्ध्वे संस्थाप्य तस्मिन् स्थापयेत्। पश्चात् शिल्पिनमाहूय पूजयित्वा शिष्टं सर्वं कारयेत्।

**स. १९ . ५८ - ६०**

शयनं चेदनन्तोर्ध्वे चाधारे शूलमर्पयेत्।
पृष्ठमध्ये च पादे च स्कन्धे च मकुटेऽप्यथ।।

शेषभोगं यथाशूलं न दृश्येत्कारयेत्तथा।
शेषोत्सङ्गे यथाबेरं शयानं कारयेत्तथा।।

रज्जुबन्धमृदाद्याश्च क्रियाः [1]पूर्ववदाचरेत्।
यथा कृमीणां नाशः स्यादोषधीभिस्तथाचरेत्।।

### ४.१८.३९ यानकमृण्मयध्रुवबेरस्य शूलस्थापनम्

**प्र. ८ . ९४ - ९७**

--------- याने वक्ष्यतेऽथ त्रिविक्रमम्।
उद्दण्डस्योरुदण्डस्य शिखा भागायते स्मृते।।

तावत्यः कटिदण्डस्य शिखायास्सम्यगन्वये।
तदायतं तु कार्यार्थं तलदण्डं तु तद्द्वितम्।।

स्थिताङ्घ्रिः स्थितिमान् प्रोक्तः शेषं चेदं शयानवत्।
एवमष्टभुजोपेतं चतुर्भुजसमन्विते।।

शूलसङ्ख्यानुरूपेण योजयेत्तु विचक्षणः।
शूलं वक्रतनौ वक्रमवक्रेऽवक्रतां नयेत्।।

---

1 सुधेष्टकादिनिर्मितबिम्बवत्।

## ४.१८.४० शूलस्थापनानन्तरं शान्तिहोमः

**ज्ञा. ४६ . ८० - ८१**

सभ्ये सर्वदोषोपशान्त्यर्थं शान्तिं व्याहृतिपर्यन्तमग्न्यास्ये जुहोति। कुण्डमध्ये प्रत्यङ्मुखः सर्वदेवावृतः स्वाहास्वधाभ्यां ब्राह्ममासनमासीनः सप्तार्चिः समुज्ज्वलन्नूर्ध्ववक्त्रो वसति। कर्णे हुते व्याधिपीडनं चक्षुष्यन्धत्वं नासिकायां महाव्याधिर्मस्तके सर्वनाशः शेषेष्वपि दारिद्र्यं तस्मात् सर्वप्रयत्नेन आस्यं बुद्ध्वा शरोऽङ्गारेऽग्नौ जुहोति।

तिलाज्यमिश्रं चरुं न्यग्रोधफलमात्रं अङ्गुष्ठानामिकामध्यमाभिः हुत्वा 'अग्नये वैश्वानराय जातवेदसे पावकाय हुताशनाय हव्यवाहनाय स्वाहाप्रियाय स्वाहा' इति हुत्वा सर्षपमिश्रं चरुं, 'यज्ञमूर्तये योगमूर्तये विष्णवे वटपत्रशायिने अनन्तशायिने पुष्करनाभाय, विश्वेश्वराय श्रियै पौष्ण्यै मृकण्डुजाय ख्यातीशाय सुपर्णाय शैषिकाय हलाय जलाय स्वाहा' इति व्याहृत्यन्तं हुत्वा अग्निं विसृज्य देवं प्रणम्याभ्यर्चयति। स्थापकेभ्यः स्वशक्त्या निष्कादहीनं पृथक् पृथक् सुवर्णं दत्त्वा पश्चात् मृत्सङ्ग्रहणं करोतीति विज्ञायते।

**खि.११ . ९६ , ९८**

पश्चात्स्थानं प्रकुर्वीत यागशालां व्रजेद् बुधः।
पश्चादग्निं समासाद्य विष्णुसूक्तं हुनेद् गुरुः।।

जुहुयात्पौरुषं सूक्तं सर्वशान्त्यै विशेषतः।
अन्तहोमञ्च हुत्वा तु ततो विप्रांश्च भोजयेत्।।

सुवर्णपशुभूम्यादीन् गुरवे दक्षिणां ददेत्।

### ४.१८.४१ शूलानां रज्जुबन्धनम्

**वि. १८ . ८६**

पश्चाद्रज्जुबन्धं कारयेत्। नालिकेरफलत्वक्तूलसारैर्यवद्वयसमस्थूलमायतं रज्जुद्वयं समाहृत्य दक्षिणाग्निकुण्डं कृत्वा आघारं हुत्वा, पूर्ववद्धान्यपीठे रज्जुं सन्यस्य 'सिराभ्यो नम' इत्यभ्यर्च्य अधिवास्य, पूर्ववद्धोमं हुत्वा, 'सिराभ्यः स्वाहे' त्यष्टोत्तरशतमावर्त्य हुत्वा, अग्निं विसृज्य पूर्ववत् आलयं प्रदक्षिणीकृत्याऽभ्यन्तरं प्रविश्य 'अतो देवा'दिना नाभिस्थानमारभ्य, सुषुम्नादिचतुर्दशनाडीनां स्थानेषु रज्जुं संन्यस्य, पश्चात् शिरावन्मूर्धादिपादपर्यन्तम् उभौ पार्श्वौ समावेष्ट्य ताम्रपट्टेन हस्तपादतलौ कृत्वा, कार्पासतन्तुना सर्वाङ्गं समावेष्ट्य, पुनस्तथा रज्जुमावेष्टयेत्। आचार्याय दक्षिणां दद्यात् । शिल्पिनं च सम्पूज्य पश्चात्संस्कारं कारयेत्।

**स.१७ . ३७ - ३९**

**ज्ञा. ४८ . ८४**

अग्निं विसृज्य नालिकेरनिर्मोकनिर्मितान् त्रिवृतान् ऋजून् रज्जून् 'स्वस्तिदा' इति सिरावद्रज्जुबन्धनं करोति । ततः शिल्पिना तदर्हं योजयेत्। मध्याह्नेऽब्जाग्नौ अब्जहोमं कृत्वा 'मेदिनी देवी' ति मृदमभिमृश्य पारमात्मिकमविच्छिन्नं जप्त्वा संयोजयेत्।

**स. १९ . ४६, ४७ ;  प्र .९ . ५, ६**

### ४.१८.४२ शूलेषु अष्टबन्धालेपनम्

**खि . १३ . ३२ - ४१**

अत ऊर्ध्वं प्रवक्ष्यामि अष्टबन्धक्रियाविधिम्।।

गुञ्जाशतं विडङ्गं च गैरिकं जञ्जरीयुतम्।

वाकुलं पर्णसारञ्च निर्यासञ्च कपित्थकम्।।

अश्वत्थादिचतुर्णां च कषायं सम्प्रगृह्य च ।
चूर्णं सङ्गृह्य चैतेषामग्निना पाचयेच्छनैः।।

नालिकेरस्य सारस्य त्रिवृतां रज्जुमाहरेत्।
ताम्रपत्रस्य नालञ्च युक्त्या सम्यक् समाहरेत्।

शूले सन्धौ तु सर्वत्र योजयेच्छिल्पिना दृढम्।
शूलाधारञ्च विधिना भित्तिमाश्रित्य कारयेत्।।

स्कन्धे पृष्ठे च पार्श्वे च हस्तसन्धौ विशेषतः।
शङ्खचक्रे समुद्दिश्य शूलाधारं प्रकल्पयेत्।।

शक्तश्चेत्ताम्रनालेन भित्तिमाश्रित्य कल्पयेत्।
शूले च पादमूले तु ताम्रनालेन कारयेत्।।

देवस्य पादमूले तु ताम्रेण तलमाचरेत्।
यथायुक्ति प्रकुर्वीत कृमीणां नाशनक्षमम्।।

अष्टबन्धं समादाय शूले चैवानुलेपयेत्।
पश्चान्मृदं समादाय शूले सर्वत्र बन्धयेत्।।

हस्तौ पादौ च सर्वत्र ताम्रपत्रेण कारयेत्।

**वि .१८ . ८५ , ८६**

पश्चात् दृढबन्धनार्थं ताम्रपट्टैः पञ्चषट्सप्ताष्टयववि‌स्तारैः विस्तारात् षड्भागघनान्वितैस्तावदायतैरतिदृढं बध्वा अष्टबन्धं निदध्यात्। चतुर्विंशतिभागं कृत्वा, श्रीवेष्टकं चतुरंशं, मृदुरुष्टं पञ्चांशं, गुग्गुल्वेकांशं, गुडमष्टांशं, सज्जरसं त्र्यंशं, धातुचूर्णं त्र्यंशं, एतैस्सह गव्यं घृतं तैलं च संयोज्य शुद्धपात्रे सङ्गृह्य पाचयेत्। आलयाभिमुखे वा आहवनीयाग्निकुण्डं

कृत्वा आघारं हुत्वा, अग्नेः पश्चिमतो धान्यपीठे वस्त्रोपरि अष्टबन्धं सन्यस्य 'मेदसे नम' इत्यभ्यर्च्य अधिवास्य विष्णुसूक्तं, पुरुषसूक्तं, वैष्णवं च हुत्वा 'मेदसे स्वाहे' त्यष्टोत्तरशतं हुत्वा, अग्निं विसृज्य शकुनसूक्तं जपन् आलयं प्रदक्षिणीकृत्य गर्भागारं प्रविश्य 'अतो देवादिना' अष्टबन्धं शूलेष्वालिप्य पश्चाच्छिल्पिनालेपयेत्। यजमान आचार्याय दक्षिणां दद्यात्। शिल्पिनं च पूजयेत्।

**स. १९ . ४७ ; प्र . ९ . ६**

### ४.१८.४३ रज्जुबन्धोपरि आलेपनार्था मृदः

**खि. १३.१.५**

पर्वते वा नदीतीरे तटाके वा मृदं हरेत्।।

गङ्गासरस्वतीसिन्धुकौशिकीनर्मदासु च ।
वण्णायां कृष्णवेण्यां च कावेर्यां यमुनातटे।।

हिमाचलोर्जयोर्विन्ध्ये विदूरे वेदपर्वते ।
महेन्द्रे माल्यवति च सह्ये किष्किन्ध एव वा।

ओघे चैव महीध्रे च सेतुबन्धे तथैव च ।
मृदं समाहरेत् तद्वत् सस्यक्षेत्रे प्रसिद्धके।।

देवालयसमीपे वा यत्र कुत्रापि पावने।

**ज्ञा . ४७.८१**

पुण्यनद्यद्रिसरस्तटाकतीरे शुद्धे देशे मनोरमे[1]

1 मृदं गृह्णीयादिति प्रकरणाल्लभ्यते।

वि. १८.८७

नादेयां सस्यक्षेत्रजां ह्रदजां देवायतनसमीपतटाकजां पुण्यतीर्थजाम् अशोष्यजलाशयजां मृदं -------------------------- गृहीत्वा,

य. १३.१९, २०

४.१८.४४ आलेपनार्थमृत्सङ्ग्रहणकालः

खि. १३.६

ग्रामस्य यजमानस्य चानुकूले दिने चरेत्[1] ।।

य. १३.२०

[ अत्र प्रशस्तदिनमात्रं निर्दिश्यत इति विशेषः। ]

वि. १८.८७

[ अत्र यज्ञाधिकारवत्। ]

४.१८.४५ आलेपनार्थमृत्सङ्ग्रहणप्रकारः

खि. १३.५ - १८

यजमानो गुरुश्चैव निमित्तान्युपलक्षयेत्।।
श्वः कर्तास्मीति सङ्कल्प्य देवदेवं समर्चयेत्।
ग्रामस्य यजमानस्य चानुकूले दिने चरेत्।।
सर्ववाद्यसमायुक्तं सर्वालङ्कारसंयुतम्।
आदाय वै वैवधिकं खनित्रं खननायुधम्।।
आलयात्पुरतो गच्छेत् उत्तरं वा यथोचितम्।

1 मृत्संग्रहणमिति प्रकरणाल्लभ्यते ।

किञ्चित्स्थानं समासाद्य तृणगुल्माद्यपोह्य च ।।

मण्डलान्युपलिप्यैव वर्णालङ्कारमाचरेत्।
यावान् वै प्रतिमायामः तावदध्यर्घमेव वा।।

खनित्वा तालमात्रं वा गृह्णीयात्तत्र मृत्तिकाम्।
तत्स्थाने पश्चिमे भागे कुण्डं श्रामणकं चरेत्।।
सूत्रोक्तेन विधानेन भूमियज्ञं समाचरेत्।
पर्यग्निञ्चैव कृत्वा तु पुण्याहं वाचयेत्ततः।।

उपलिप्य च तत्स्थानमलङ्कृत्य विशेषतः।
हरिणीमर्चयेत्तत्र सप्तविशंतिविग्रहैः।।

पश्चिमे चक्रमभ्यर्च्य उत्तरे शान्तमर्चयेत्।
आचार्यं पूजयित्वा तु वस्त्राभरणकुण्डलैः।।

पादौ प्रक्षाल्य चाचम्य खनित्रं सम्प्रगृह्य च ।
आचार्यः प्राङ्मुखः स्थित्वा 'अतो देवादि' मुच्चरन्।।

खनित्रेण खनित्वा तु विष्णुसूक्तं समुच्चरन्।
उभाभ्याञ्चैव हस्ताभ्यां मृदमादाय भक्तितः।।

सौवर्णे राजते पात्रे ताम्रे कांस्यमयेऽथवा।
प्रतिमामानमाज्ञाय तदर्हां मृदमाहरेत्।।

वैवधेनैव चाहृत्य शाकुनं सूक्तमुच्चरन्।
देवालयं शनैर्गत्वा प्रदक्षिणमथाचरेत्।।

उत्तरे च मृदं स्थाप्य वैवधादीन् प्रपूज्य च ।

**ज्ञा. ४७.८१, ८२**

पूर्ववत्[1] गत्वा संशोध्य अभ्यर्च्य श्रियं हरिणीं च वीशशैषिकौ, प्रोक्षणैः प्रोक्ष्य, पुण्याहं वाचयित्वा, उक्तलक्षणसम्पन्नामायुर्वर्णसमन्वितां शुभवृद्धिदां महीं महीसूक्तेनादाय, शान्तिं हुत्वा, देवीभ्याम् ऋषिभ्यां वीशशैषिकाभ्यां नदीभ्यः पर्वतेभ्यो नागेभ्यो हुत्वा, अग्निं विसृज्याशीर्भिराघोष्यागारं गत्वा, अभ्यन्तरं प्रविश्य, उत्तरे पार्श्वे पार्थिवं धूपदीपसमन्वितं स्थापयेत्।

**स. १९.४१**

[ अत्र यथोक्ताः मृदः समाहृत्येत्येव निर्दिश्यत इति विशेषः। ]

**प्र. ९.१**

[ अत्र समूर्तार्चनाधिकरणवत्। ]

**य. १३.२०**

[ अत्र आहरेन्मतिमान् मृदमित्येव निर्दिश्यत इति विशेषः। ]

**४.१८.४६ आलेपनार्थमृत्संस्कारः**

**ज्ञा. ४७ .८२ ज्ञा.४८. ८२, ८३**

गन्धवर्णयुतं साद्यस्कं, कापिलं घृतं, कांस्ये त्रिद्व्येकप्रस्थं कुडुबं प्रस्थार्धं वा तदर्धमादाय, संशोध्य, दधिपयोऽतसीस्नेहानेकैकं घृतात्पादाधिकं गृहीत्वा, उत्पूय यवसर्षपगोधूमातसीतिल्वदीप्तीनां चूर्णं पृथक् पृथक् हतमादायैकस्मिन् भाण्डे क्षिप्त्वा, पिधाय मासमात्रं तदर्धं दशरात्रं वा निधापयेत्। नारशब्दाखुकर्णीत्रिप (?) चलचाकृष्णामरदारुहरितालहारिद्रमरीचविडङ्गब्राह्मीन् संशोध्याशोष्य, त्रिपलं द्विपलं पलं वा चूर्णीकृत्य द्रोणे द्रोणार्धे आढके वा जले क्षिप्त्वा, अर्धमासं तदर्धं वा

1 शिलासंग्रहणादिवत्।

निधापयेत्। न्यग्रोधाश्वत्थोदुम्बरप्लक्षखदिरवञ्चुलासनादीनां निर्मोकं पृथक् पृथक् कुट्टयित्वा भागमाहृत्य, तुलस्यपामार्गनन्द्यावर्तकरवीरभूपत्र-बिल्वादित्यसाह्वयसहदेवीलक्ष्मीशमीपत्रसारे अश्वत्थाद्यजिनानि आक्षिप्य, अर्धमासं निधापयेत्। अश्वत्थोदुम्बरप्लक्षाणां क्षीरमेकैकं घृतार्धमाहृत्यैकस्मिन् भाजने क्षिप्त्वा, श्रीवेष्टसर्जरसकुन्दुरुगुग्गुलुकपित्थनिर्यासान् समभागं चूर्णं कृत्वा, तस्मिन् दशरात्रं निधापयेदिति विज्ञायते।

एवं कृत्वा अभिनवेषु वटेषु फलकेषु वा प्रोक्ष्य, 'उदुत्यं चित्र' मिति मृदमवकीर्य, विश्वामित्रान् परिहृत्याऽऽतपेनाशोष्य, गायत्र्या प्रोक्ष्य 'मेदिनी देवी' ति पात्रेष्वापूर्य, एवं क्रमेणाशोष्य देवागारोत्तरे उलूखलमुसलौ प्रक्षाल्य, संस्थाप्य, ब्रह्मेश्वरावभ्यर्च्य, 'श्रिये जात' इत्यापूर्य, 'अतो देवादिभिः' चूर्णयित्वा, अभिनवेषु भाण्डेषु धूपितेषु वकुल-चम्पकमल्लिकादिभिर्वासितेषु अहोरात्रमापूर्य, नादेयं जलमादायोत्पूय, 'इदमापश्शिवा ' इत्यपोऽभिमन्त्र्य, 'इदं विष्णु' रिति पुनः पुनः मर्दयित्वा, आदाय, 'ये ते शत' मिति ब्राह्मे मुहूर्ते क्षिप्त्वा सहस्रशीर्षादिनाभिमृश्य, एकाक्षरादिना वस्त्रेण संशोध्य, अहोरात्रं निधाय, जलमास्राव्य, पूर्वोक्तस्नेहकषायचूर्णौषधैः 'ब्रह्मा देवाना' मिति संसृज्य, 'पूषात' इति मर्दयित्वा, चन्दनागुरुकोष्ठूशीरैलालवङ्गजातीफलाङ्गनादीनि (?) पेषयित्वा 'यन्मे गर्भम्' इति क्षिप्त्वा, सुवर्णरजतताम्रचूर्णैः सम्मर्द्य कपित्थनालिकेरत्वक् चूर्णम् 'इन्द्रं प्रणवन्त' मिति प्रक्षिप्य 'वायुप' रीति पुनः पुनः मर्दयित्वा, प्रोक्षणैः प्रोक्ष्य, वितानाच्छादिते धूपदीपसमन्वितं त्रिरात्रमेकरात्रं वा क्षिपेत्। सकृत् कृत्वैवमभिनवेषु दधिदुग्धनालिकेरसलिलानि कांस्ये तदर्धं प्रस्थं वा आहृत्य, संस्राव्य, वकुलबदरफलसारान् पृथक्

पृथक् दुग्धार्धं संस्राव्य, महिषाक्षयज्ञयूपसायसशल्ककपित्थकुष्ठगैरिकान् पृथक् पृथक् तदर्धं पादं वा चूर्णीकृत्य क्षिप्त्वा करञ्जाश्वत्थादिनिर्यासान् पादाधिकदुग्धेन पेषयित्वा, प्रक्षिप्य, त्रिफलाविश्वभेषजघनचपलान् एकैकं निर्यासार्धं क्षिप्त्वा, नदीरोहादिक्षीरदुग्धं यथालाभं प्रक्षिप्य, वस्त्रेणावेष्ट्य त्रिरात्रं वा निधापयेत्।

**स. १९. ४३ - ४५**

सम्पेष्य शोधयित्वैव यथोक्तं सर्वमौषधम्।
चूर्णानि च यथोक्तानि कषायाणि विधानतः।।

योजयित्वा यथाभागं गव्यैरपि सहैव च।
निर्यासेन कपित्थस्य युक्तं नादेयवारिणा।।

पेषयित्वा मृदः सम्यक् संस्कृत्य च विधानतः।
साधयित्वाथ मासं वा मासार्धं वा निधाय च।।

**प्र. ९.२ - ४**

[ अत्र समूर्तार्चनाधिकरणवत् ]

**खि. १३. १८ - ३२**

आलयात्पुरतो वापि उत्तरे वा मनोरमे।।

मण्डलान्युपलिप्यैव धान्यानि च समास्तरेत्।
उलूखलं स्थाप्य तत्र मुसलानि तथैव च।।

उलूखलेऽभ्यर्च्य सोमं मुसलेषु सुदर्शनम्।
आहूय नारीः सम्पूज्य जयाद्यास्ता हृदा स्मरन्।।

ताभिः सञ्चूर्णयित्वा तु तुषादीन् संव्यपोह्य च ।

शूर्पेण शोधयित्वा तु मृद्भाण्डे सम्प्रपूरयेत्।।

नादेयं जलमादाय सर्वगन्धसमायुतम्।
पूरयित्वा जलेनैव तानि गुप्ते समर्पयेत्।।

आदाय चौषधीः पश्चाच्चूर्णयित्वा विचक्षणः।
तच्चूर्णं मरिचञ्चैव हरिद्रं च विडङ्ग (क) म्।।

यवान् माषांश्च मुद्गांश्च गोधूमान् परिगृह्य च ।
समभागान् सुसंहृत्य चूर्णं कुर्याद्विचक्षणः।।

चूर्णप्रमाणं कापित्थं निर्यासं परिगृह्य च ।
सर्वं सञ्चूर्णयित्वा तु गुप्ते देशे विनिक्षिपेत्।।

पलाशाश्वत्थखदिरापामार्गार्कास्तथा पुनः।
नन्द्यावर्तञ्च पद्मं च तुलसीविष्णुपर्णिकाम्।।

एतेषां च रसं गृह्य एकपात्रे निधापयेत्।
क्षीरं घृतञ्च दधि च अर्कक्षीरमथाहरेत्।।

अश्वत्थादिचतुर्णां च सारं सम्यक् प्रगृह्य च ।
एतेषां तु समं गृह्य अतसीस्नेहमुत्तमम्।।

अतसीचूर्णसंयुक्तं कपिलाघृतसंयुतम्।
सर्वासामोषधीनाञ्च चूर्णं मृत्सु विनिक्षिपेत्।।

नारिकेलस्य सारन्तु चूर्णं कृत्वा विशेषतः।
निर्यासेन कपित्थस्य युक्त्या तत्र प्रपूरयेत्।।

शिल्पशास्त्रसुनिष्णातैः प्रबुद्धैः सम्प्रपूरयेत्।
तेनोक्तेन प्रकारेण मर्दयित्वा मृदा सह।।

मासं पक्षञ्च सप्ताहं गुप्ते देशे निधापयेत्।

**वि. १८.८७**

अभिमुखे नववस्त्रे कटे वा प्रक्षिप्य संशोष्य शोधयित्वा नवे मृद्भाण्डे गृहीत्वा शुचौ देशे अतिवातरहिते संस्थाप्य गन्धसहितां वालुकां चाक्षिप्य खदिरककुभत्वक्तोयकषायेनालोड्य एकमासं तोये परिवासयेत्। अश्वत्थोदुम्बरप्लक्षन्यग्रोधत्वक्कषायाम्बुना सेचयित्वार्धमासं वासयित्वा, त्रिफलोदकेनाऽलोड्य, मृत्तुरीयांशपाषाणचूर्णसंयुक्तं तथार्धमासं वासयित्वा-यवसारगोधूममाषचूर्णसंयुक्तं श्रीवेष्टकं गुग्गुलुकुन्दुकुष्टसज्जरसानां षोडशांशं संयोज्याऽऽलोड्य दधिमधुसर्पिर्भिः अतसीस्नेहेन सहितं तिलजेन सार्धं बिल्वफलसारं यथाभागं संयोज्यार्धमासं वासयेत्। तस्मिन् रजनीकटुकत्रयचूर्णं तद्दशांशं संयोज्य, श्लक्ष्णं कृत्वा, तदर्धं कपित्थ-निर्यासचूर्णं हरितालकोष्टरोचनाकृष्णचन्दनागरुचूर्णं च यथालाभं सुवर्णरजतचूर्णयुक्तं कदलीफलनारिकेलसलिलं गोक्षीरं च संयोज्य संमर्द्य नदीपर्वतसस्यक्षेत्रवल्मीकसमुद्रजलगजवृषशृङ्गोद्भेदकुलीरावटजां मृदं च किञ्चित् समादाय, शोधयित्वा, चूर्णीकृत्य संयोज्य त्रिरात्रं वासयित्वा।

**य. १३.२० - २७**

**४.१८.४७ रज्जुबन्धोपरि मृदालेपनप्रकारः**

**वि . १८ . ८७ - ८८**

सुनक्षत्रे सुमुहूर्ते चाऽऽलयाभिमुखे गार्हपत्याग्निकुण्डं कृत्वा, आघारं हुत्वा, अग्नेः पश्चिमस्यां (मायां) पूर्ववत् धान्यपीठे नववस्त्रे मृदं संन्यस्य 'मांसेभ्यो नम' इत्यभ्यर्च्य अधिवास्याऽग्निं परिस्तीर्य, महीसूक्तं, भूमिदेवत्यं, विष्णसूक्तं, पुरुषसूक्तं, वैष्णवं, मुन्योर्मन्त्रांश्च हुत्वा, 'मांसेभ्यः स्वाहे'-

त्यष्टोत्तरशतं जुहुयात्। आचार्यं पूजयेत्। देवं ध्यायन् 'नेक्षरा' दिना मृदमभिमृश्य मेदिन्यादीन् पारमात्मिकं च जपन्, रज्जुबन्धादुपरिष्टात् उत्तमाङ्गादिमहाङ्गेषु मृदमालिप्य, पश्चाच्छिल्पिनमाहूय, पूजयित्वा हस्तेन विना सर्वाङ्गेषु करण्डिकयाऽऽलिप्य, पुनरपि रज्जुं तथाऽऽबध्य शोषयित्वा, पश्चान्मृदं संयोज्य तदूर्ध्वे रज्जुं न योजयेत्। तदूर्ध्वे रत्नानि सन्न्यसेत्।

**य. १३ . २८ - ३४**

**खि. १३ . ४३ - ५०**

मृदं पश्चात्समादाय विष्णुसूक्तं समुच्चरन्।।

पुनः पुनर्मर्दयित्वा देवागारं प्रवेशयेत्।
सर्ववाद्यसमायुक्तं शकुनसूक्तसमन्वितम्।।

ब्रह्मघोषसमायुक्तं जयशब्दसमन्वितम्।
शूलस्य दक्षिणे पार्श्वे स्थित्वा चैवोत्तरामुखः।।

पुरुषसूक्तं जपित्वा तु मृदमादाय भक्तितः।
मूर्धादिपादपर्यन्तं मृदमालिप्य यत्नतः।।

देवानन्यान् समुद्दिश्य तत्तन्मन्त्रमुदीरयन्।
मृदमालिप्य यत्नेन मूर्धादिषु च सर्वतः।।

पश्चाच्छिल्पिनमाहूय पूजयित्वा विशेषतः।
शिल्पशास्त्रोक्तविधिना शिल्पिना कारयेत्ततः।।

षण्मासं वा त्रिमासं वा मासं वापि यथोचितम्।
शोषयित्वा तु बिम्बानि कारयेत्तु शनैः शनैः।।

अङ्गोपाङ्गेषु सर्वत्र उज्जानं( ?) च यथार्हतः।
शिल्पशास्त्रोक्तविधिना कारयेत्तु यथाऽर्हतः।।

**स.१९ . ४७ - ४८**

[ अत्र शूलोपरि प्रमाणं चतुर्धा विभज्य त्रिभागं मृदा कुर्यादित्यधिकम्। ]

**प्र . ९ . ६, ७**

[ अत्रापि समूर्तार्चनग्रन्थ इव। ]

**४.१८.४८ मृदालेपनानन्तरं होमविधानम्**

**ज्ञा. ४८ . ८३**

एतेन अतो देवादिना शूलमालिप्य प्राच्यामौपासनाग्नौ शान्तिं हुत्वा विष्णवे श्रियै हरिण्यै चिरायुषे ख्यातीशाय गरुडाय शान्ताय चक्राय शङ्खाय भूतेभ्यः सर्वाभ्यो देवताभ्यः स्वाहेति हुत्वा व्याहृत्यन्तं जुहुयात्। एतत् पार्षदम् इति।

**खि. १३ . ४० - ४३**

पश्चान्मृदं समादाय शूले सर्वत्र बन्धयेत्।।

हस्तौ पादौ च सर्वत्र ताम्रपत्रेण कारयेत्।
आलयात् पुरतश्चैव प्राच्यामाहवनीयके।।

आघारं विधिवत्कृत्वा पुरुषसूक्तं च हूयताम्।
जयादीनपि हुत्वा तु पाञ्चभौतिकसंयुतम्।।

हुत्वा चैव विधानज्ञः प्रत्येकं चैकविंशतिम्।

**४.१८.४९ मृदालेपनानन्तरं रत्नन्यासः**

**ज्ञा. ४९ . ८४**

हृदये पद्मरागं, ललाटे जातिरत्नं, ग्रीवायां मौक्तिकं, बाह्वोर्वैडूर्यं, नाभौ

ब्रह्ममणिं, मेढ्रे सौवर्णं, पादयोः पुष्यकान्तचन्द्रकान्तौ, एकाक्षरादिसूक्तं विष्णुसूक्तं, पुरुषसूक्तं, दुर्गासूक्तं, पारमात्मिकं, ध्रुवसूक्तं, गोदानसूक्तं क्रमेण जपन् तत्तत्स्थाने रत्नानि निक्षिपेत्। दक्षिणेऽक्ष्णि 'सूर्योऽसी' ति सूर्यकान्तं, वामे 'चन्द्रोऽसी' ति चन्द्रकान्तं, श्रोत्रे 'मरुतः परमात्मा' इति वज्रं दक्षिणे, वामे 'सोमं राजान' मिति शङ्खं, नासिकापुटयोः 'रुद्रमन्यं त्र्यम्बकम्' इत्यमृताश्मकनीलौ, आस्ये 'पावका न' इति प्रवालं प्रतिष्ठाप्य।

**वि. १८ . ८८**

### ४.१८.५० रत्नन्यासानन्तरं विविधाङ्गानां कल्पनम्

**ज्ञा. ४९ . ८४**

पश्चाच्छिल्पिना किरीटमूर्धललाटकण्ठभ्रूनयनघ्राणोत्तरोष्ठकपोलच्चर्च ( ?) ग्रीवाबाहुजत्रुवक्षोहृदयपार्श्वकक्षप्रकोष्ठकूर्परपाण्यङ्गुलिस्तनोदर- नाभिकटिपृष्ठयोनिमुष्कोरुजानुजङ्घागुल्फप्रपदपार्ष्ण्यङ्गुल्याद्यङ्गप्रत्यङ्गानि लक्षणयुतं कारयेत्।

### ४.१८.५१ अङ्गकल्पने जागरूकतावश्यकता

**वि. १८ . ९०**

चक्षुच्छिद्रे यजमानस्यान्धत्वम्, कर्णच्छिद्रे बधिरत्वम्, आस्यच्छिद्रे मूकत्वं, घ्राणादिमार्गच्छिद्रे प्रमेहकुष्ठादिव्याधयो धान्यादिनाशश्चाचिरादेव भवेयुः। महाङ्गोपाङ्गप्रत्यङ्गभेदैः स्थानभ्रंशो भवेत्। तस्मात् सर्वं परिहृत्यैव कारयेत्।

### ४.१८.५२ शूलगर्भाणां मृण्मयध्रुवबेराणां शर्करालेपनम्

**खि. १३ . ५१ - ५८**

शर्कराः सम्प्रगृह्यैव चूर्णं कृत्वा विशेषतः।

शनैः शनैः शोषयित्वा नादेयेन जलेन वै।।

निर्यासेन कपित्थस्य पिचुना सहितेन वै।
पेषण्या पेषयेत्सम्यक् सर्वगन्धसमायुतम्।।

एवं संसाध्य यत्नेन यजमानयुतो गुरुः।
आलयाद्दक्षिणे पार्श्वे अन्वाहार्यं प्रकल्पयेत्।।

आघारं विधिवत्कृत्वा विष्णुसूक्तं सुहूयताम्।
जयादीनपि हुत्वा तु यद्देवादि सुहूयताम्।।

विष्णुसूक्तं समुच्चार्य मर्दयित्वा तु शर्कराः।
सर्ववाद्यसमायुक्तं देवागारं प्रवेशयेत्।।

बिम्बस्य दक्षिणे स्थित्वा पुरुषसूक्तं समुच्चरन्।
मूर्धादिपादपर्यन्तं शर्करालेपमर्पयेत्।।
काले शिल्पिनमाहूय पूजयित्वा विशेषतः।
शिल्पशास्त्रोक्तविधिना प्रतिमां कारयेत्ततः।।

मासं पक्षं च सप्ताहं शोषयित्वा विधानतः।

**वि. १८ . ८८ - ९०**

मासेऽतीते शर्कराकल्कं संलेपयेत्। ------------- पुण्यनक्षत्रे समीपे नदीतीरे वा अन्यस्मिन् मनोरमे शुद्धे देशे खनित्वा, आहृत्य, प्रक्षाल्य, संशोध्य, चूर्णीकृत्य त्रिफलोदकेन सिञ्चन्, शनैः शनैः शोषयित्वा, कपित्थ-निर्यासतोयेनाऽलोड्य कार्पासतूलसंयुक्तमतिसूक्ष्मं सुश्लक्ष्णम् आलोड्य, आवसथ्याग्निकुण्डं कृत्वा, आघारं हुत्वा, पूर्ववद्धान्यपीठे नववस्त्रोपरि शर्करां विन्यस्य, 'रुधिराय नम' इत्यभ्यर्च्य, अधिवास्य, अग्निं परिस्तीर्य,

वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, श्रीसूक्तं, शान्तिहोमं हुत्वा 'रुधिराय स्वाहे' त्यष्टोत्तरशतं जुहुयात्। 'विष्णवे', श्रियै, हरिण्यै, चिरायुषे, ख्यातीशाय,गरुडाय, चक्राय, शङ्खाय,भूतेभ्यः, सर्वाभ्यो देवताभ्यः स्वाहेति व्याहृत्यन्तं जुहुयात्। 'एतत्परिषद' मिति अग्निं विसृजेत्। आचार्यदक्षिणां दद्यात् । शर्करां 'अग्निरिन्द्रा' इत्यादिनाऽभिमृश्य पुरुषसूक्तेनाऽलेपयेत्। पश्चाच्छिल्पिनमाहूय सम्पूज्य तत्कल्कं सर्वाङ्गेषु समालिप्यैवं मासं प्रति शुष्कं संलक्ष्य, अच्छिद्रमभेद्यं तत्कल्केन तन्निर्यासम्बुना अङ्गोपाङ्गप्रत्यङ्गानि यथा सम्पूर्णानि तथा कुर्यात्।

---

शिल्पिना सुदृढं निर्विवरं समाच्छाद्य, कल्कं प्रलेप्य, पश्चाद् भूषणैर्भूषयेत्।
बेरे शैले दारवे च शर्करादि नैव योजयेत्।

**ज्ञा. ४९ . ८४**

[ अत्र अग्निरिन्द्रादिना इत्यस्य स्थाने अन्येऽपि केचन मन्त्राः विहिताः। ]

**य. १३ . ३५ - ४४**

शर्कराः कल्कसंयुक्ता मासेऽतीते च लेपयेत्।
पुण्यक्षेत्रे शुचौ देशे सङ्गृह्यैव च शर्कराम्।।

प्रक्षाल्य शुद्धतोयेन चूर्णीकृत्वाऽतिसूक्ष्मकम्।
त्रिफलोदेन सम्मर्द्य शोषयित्वा शनैः शनैः।।

कपित्थनिर्यासतोयैः समालोड्य पुनः पुनः।
कार्पासतूलसंयुक्तं सुश्लक्ष्णं सुमनोहरम्।।

समालोड्यातिसूक्ष्मं च हेमपात्रे सुसन्न्यसेत्।
अग्निं सम्पाद्य सभ्यग्नौ वैष्णवं मन्त्रमेव च ।।

श्रीभूसूक्तं च हुत्वान्ते स्वाहान्तं 'रुधिराय' च।
सहस्रं जुहुयान्मन्त्री स्थण्डिलोपरि विन्यसेत्।।

'रुधिराय' समभ्यर्च्य नमोन्ते चाधिवास्य च ।
विष्णुं श्रियं च पौष्णीं च ख्यातीशं च चिरायुषम्।।

गरुडं शान्तचक्रौ च सर्वभूतानि वैष्णवम्।
स्वाहान्तं जुहुयादग्निं विसृज्यैव पुनर्गुरुः।।

शर्करां शिरसाऽदाय गर्भगेहं प्रविश्य च ।
नरसूक्तं समुच्चार्य गुरुरालेपयेत्क्रमात्।।
तत्तन्मन्त्रेण देव्यादीन् समालिप्य पुनर्गुरुः।
आहूय स्थपतिं पूज्य साङ्गोपाङ्गं सलक्षणम्।।

निवेद्य कारयित्वा --------------------।

**अ. ११**

अत ऊर्ध्वं प्रवक्ष्यामि शर्करालेपनक्रमम्।।

पुण्यक्षेत्रे च नद्यादौ यथोक्तं चाहरेच्छिलाम्।
प्रक्षाल्य शुद्धतोयेन चूर्णीकृत्य सलक्षणम्।।

सिञ्चयेच्छ्रीफलोदेन शोषयित्वा शनैः शनैः।
कपित्थनिर्यासतोयेन कार्पासं तूलसंयुतम्।।

क्रमेणालोड्य मतिमानतिसूक्ष्मं सलक्षणम्।
एवं सङ्गृह्य पात्रे तच्छर्करापिष्टमुत्तमम्।।

परिषिच्य मूर्तिहोमे वा सभ्याग्नौ वा यथोदितम्।
अग्नेः पश्चिमतो भागे धान्यपीठं सलक्षणम्।।

आच्छाद्य नववस्त्रेण तस्मिन् पिष्टं सुसन्यसेत्।
अभ्यर्च्य पुष्पगन्धाद्यैः रुधिरायतमेव च ।।

वैष्णवं विष्णुसूक्तेन श्रीभूसूक्तसमन्वितम्।
स्वाहान्तं रुधिरायेति शतमष्टोत्तरं यजेत्।।

यद्देवस्य च यन्मन्त्रं ब्रह्मादीशानसंयुतम्।
व्याहृत्यन्तं च हुत्वान्ते अग्निं सम्यग्विसृज्य च ।।

आचार्यदक्षिणां दत्वा कर्ता चैव सहात्र वै।
यनचन्द्रादिनादित्या अभिमृश्य च शर्कराम्।।

ह्यालेपयेद्धरेरङ्गे नरसूक्तेन मन्त्रवित्।
देव्यादिपरिषदः सर्वे तत्तन्मन्त्रेण मन्त्रवित्।
समालिप्य ततश्शिल्पिमाहूतं तं नियोजयेत्।।

------------------------------

ततः कल्केन शिल्पी तु मासं मासं प्रति प्रति।।

क्रमेणालिप्य सर्वत्र दर्शनीयं च सुन्दरम्।
सर्वावयवसम्पूर्णं यथानेत्रमनःप्रियम्।।

सम्पूर्णनयनं देवं कर्णान्तायतलोचनम्।

**स. १९ . ४९ , ५०**

घटशर्करया वस्त्रं मौक्तिकावर्णसंयुतम्।
पूरयेदन्यभागं च तत्प्रमाणविधानतः।।

शर्करां च समालिप्य --------- ।

**प्र . ९ . ८,९**

### ४.१८.५३ मृण्मयध्रुवबेराणां शर्करालेपनानन्तरं पटाच्छादनम्

**वि. १८ . ८९**

पुनः शुद्धं कार्पासतन्तुना कृतं सूक्ष्मं वस्त्रं समाहृत्य, पूर्ववत्सभ्याग्निकुण्डं कृत्वा, आघारं हुत्वा, पूर्ववद्धान्यपीठे नववस्त्रे अम्बरं सन्यस्य, 'त्वचे नम' इत्यभ्यर्च्य, अधिवास्य, अग्निं परिस्तीर्य, विष्णुसूक्तं,पुरुषसूक्तं, सहस्राहुतीर्हुत्वा, 'त्वचे स्वाहे' त्यष्टोत्तरशतं हुत्वा, सर्वदेवत्यं च हुत्वा अग्निं विसृजेत्। आचार्यदक्षिणां दद्यात्। विष्णुगायत्र्या अम्बरं प्रोक्ष्य 'सोमस्य तनुरसि' इत्याच्छादयेत्।

**ज्ञा. ४९ . ८५**

[ अत्र गार्हपत्ये सहस्राहुतीर्हुत्वा इति विशेषः। ]

**य. १३ . ४४ - ४७**

**अ. ११ . ५१ - ५७**

कारयेन्मतिमान् शिल्पी पटमाच्छादयेत्पुनः।।

शिलामयं चेत्तच्छूलं पटेनैव विचक्षणः।
भूषणानि समारोप्य मौक्तिकेनानुलेपयेत्।।

शूलं दारुमयं चेत्तद्वस्त्रं सूक्ष्मतरं तथा।।
कार्पासमयं तद्धीमान् समाहृत्य दिने शुभे।

सभ्याग्नौ पूर्ववन्मन्त्री वैष्णवादीन् यथोचितम्।।
अभ्यर्च्य स्थण्डिले वस्त्रं त्वचेति ? मूर्तये।।

हिरण्यपवमानाद्यैः बेरं प्रोक्ष्यैव मन्त्रवत्।
'सामस्ये' ति च मन्त्रेण बेरमाच्छादयेत्क्रमात्।।

शिल्पिभिः सुदृढं पश्चात् नीरन्ध्रं च सलक्षयेत्।
स शिल्पी कल्कतोयेन लेपयेदव्ययं प्रभुम्।।

भूषणाम्या ? लङ्कृत्य ----------

**खि. १३ . ५८ - ६५**

नवं मृदु सुसूक्ष्मं च कार्पासं वस्त्रमाहरेत्।।

अग्रं पादञ्चाङ्कयित्वा मुखं पृष्ठं तथैव च।
आलयस्य प्रतीच्यान्तु गार्हपत्यं प्रकल्पयेत्।।

आघारं विधिवत्कृत्वा मथितेनैव वह्निना।
पारमात्मिकसंयुक्तमोङ्कारादिसमायुतम्।।

व्याहृत्यन्तं च जुहुयाद्देवेशं मनसा स्मरन्।
सर्ववाद्यसमायुक्तं देवागारं प्रवेशयेत्।।

तान्तवं वस्त्रमादाय विष्णुसूक्तं समुच्चरन्।
मुखे किञ्चित्सुसञ्छाद्य देवदेवं प्रणम्य च ।
काले शिल्पिनमाहूय पूजयित्वा यथाविधि।
वस्त्रमादाय हस्ताभ्यां छादयित्वा विधानतः।।

मूर्धादिपादपर्यन्तं वेष्टयित्वा तु सर्वतः।
शर्करादिक्रमं सर्वं सर्वाभरणसंयुतम्।।

शिल्पिना कारयेत् पश्चात् शिल्पशास्त्रोक्तमार्गतः।

**स. १९.५०**

[ अत्र 'पटं संयोज्य पूर्ववत्' इत्येव निर्दिश्यते। ]

### ४.१८.५४ मृण्मयध्रुवबेराणां मौक्तिकमृदालेपनम्

**य. १३ . ४९ - ५१**

मौक्तिकानां मृदं पश्चात्समादाय तथैव च ।
औपासनाग्नौ पूर्वोक्तं हुत्वैव स्थण्डिलोपरि।।

हेमपात्रे समभ्यर्च्य त्वग्वासिभ्यो नमोन्तकम्।
सुमुहूर्ते समादाय विष्णुसूक्तेन लेपयेत्।
तत्तन्मन्त्रेण देव्यादीन्समालिप्य च शिल्पिना।।

ततश्चालिप्य सर्वत्र दक्षिणां सन्ददेद्गुरोः।

**वि. १८ . ९०**

बाह्ये मौक्तिकं मृदमालिप्य तद्बेरोपरि चक्षुःश्रोत्रास्य घ्राणादिमार्गेष्वभेद्यं महाङ्गोपाङ्गेष्वभेद्यं न हीनं नाधिकं यथापूर्वं तथैव कल्केन परिकल्पयेत्। अन्यथा तद्बेरे देवो न वसेत्।

**अ.११**

---------------- मौक्तिकं मृदमाहरेत्।
तथैवाभ्यर्च्य सभ्याग्नौ महीसूक्तं यजेत्क्रमात्।।
भूमिं तस्मिन् समभ्यर्च्य श्रीसूक्तेनैव लेपयेत्।

**स. १९ . ५० , ५१**

मौक्तिकाख्यं मृदालिप्य भूषणानि प्रकल्प्य च ।।
यथोक्तेन विधानेन[1] वर्णानपि सुयोजयेत्।
मृण्मयं ध्रुवबेरं चेत् कारयेदेवमेव तु।।

**प्र. ९ . ९ , १०**

---

1 शिलाबेरे वर्णयोजनवत्।

### ४.१८.५५ मौक्तिकमृदालेपनानन्तरम् आभरणकल्पनम्

**ज्ञा. ४९ . ८५**

तद्बाह्ये मौक्तिकमृदमालिप्य किरीटोष्णीषमकरकुण्डलहारकेयूरकटकोदरबन्धनोपवीतकटिसूत्रप्रलम्बमेखलाङ्गुलीयकपादाभरणान्यम्बराणि च कारयेत्। दशरात्रं पञ्चरात्रं त्र्यहं वा अतीत्यावसथ्ये महाशान्तिं पार्षदं च जुहुयात्।

### ४.१८.५६ एकबेरप्रतिष्ठायां ध्रुवार्चनस्य वर्णलेपननिषेधः

**स. १३ . ५३ , ५४**

एकबेरप्रतिष्ठा चेत् वर्णहीनं शिलामयम्।।
ब्रह्मस्थाने प्रतिष्ठाप्य पूजयेदिति शासनम्।

**क्रि. ३ . ४२ , ४४**

### ४.१८.५७ बहुबेरप्रतिष्ठायां ध्रुवार्चनस्य वर्णलेपनावश्यकता

**अ १२**

बहुबेरप्रतिष्ठा चेत् वर्णयुक्तं ध्रुवं चरेत्।।
वर्णहीनं ध्रुवं कुर्यात् विनश्यति न संशयः।

**स.१३. ५४, ५५ ; स. १९ . १८**

### ४.१८.५८ ब्राह्मणादिहितानुरोधेन श्वेतादिवर्णभेदः

**स. २१ . ३ - ६**

ब्राह्मणानां हितार्थाय श्वेतवर्णः प्रशस्यते।।

क्षत्रियाणां हितार्थाय रुक्माभं चैव कथ्यते।
रक्ताभा प्रतिमा प्रोक्ता वैश्यानां हि हिताय वै।।

सस्यश्यामं हरे रूपं शूद्राणामृद्धिदं क्रमात्।
चतुर्युगान् समुद्दिश्य चतुर्वर्णान् क्रमाद्विदुः।।

युगानां चैव सर्वेषां श्यामं योग्यतमं भवेत्।

**वि. २० . १०३**

देवः कृतयुगे श्वेतवर्णः, त्रेतायां रुक्माभः, 'द्वापरे रक्ताभः' कलौ श्यामवर्णः, सर्वेषु श्यामवर्णो वा

### ४.१८.५९ वर्णलेपने श्यामवर्णप्राशस्त्यम्

**स. २१ .१ - ३**

अतः परं प्रवक्ष्यामि देवानां वर्णमुत्तमम्।
शुद्धः सङ्कीर्णकश्चैव वर्णभेदस्त्वनेकधा।।

सर्वेषां पञ्चमूर्तीनामादिर्नारायणः स्मृतः।
वर्णानामपि सर्वेषामादिः श्याम उदाहृतः।।

श्यामवर्णं हरे रूपं तस्माच्छ्रेष्ठतमं विदुः।

**वि. १८.९० ; २०. १०३**

### ४.१८.६० श्यामवर्णलेपनस्य फलम्

**स. २१ . ६ - १०**

सर्वेषामेव वर्णानां श्याम एव प्रशस्यते।।

श्यामवर्णं हरे रूपं सर्वकामफलप्रदम्।
सर्वप्रजानामृद्ध्यर्थं सर्वोपद्रवनाशनम्।।

राष्ट्राभिवृद्धिदं चैव राज्ञां च बलवर्धनम्।
ग्रामशान्तिकरं चैव सस्यानामभिवर्धनम्।।

सर्वेषां चैव पुष्ट्यर्थमायुर्वृद्ध्यर्थमेव च।
पत्नीभृत्यमनुष्याणां पशूनामृद्धिमादिशेत्।।

यजमानेप्सितं सर्वं शीघ्रमेव प्रयच्छति।
तस्मात् सर्वप्रयत्नेन श्यामरूपं च कारयेत्।।

**४.१८.६१ वर्णलेपने बहवो वर्णजातयः**

**खि. १३ . ६५ - ७०**

अतः परं प्रवक्ष्यामि वर्णानां विधिमुत्तमम्।।

श्वेतो रक्तस्तथा पीतस्तथैव शुकसन्निभः।
चाषपत्रनिभः कृष्ण इति षड् वर्णजातयः।।

श्वेतरक्तावुभौ वर्णौ सत्त्वजाविति कीर्तितौ।
श्यामकाञ्चनवर्णौ तु राजसावित्युदाहृतौ।।

चाषपत्रनिभः कृष्णवर्णश्चोक्तौ तु तामसौ।
परस्परं मिश्रणेन बहवो वर्णजातयः ।।

रक्तमिश्रः श्वेतमिश्रः पीतमिश्रस्तथैव च ।
श्याममिश्रश्चाषमिश्रः कृष्णमिश्रस्तथैव च।।

एवमादिविभेदेन जायन्ते वर्णजातयः।

**४.१८.६२ वर्णलेपने वर्णसंस्कारः**

**य. १३ . ५२ - ६१**

वक्ष्यामि वर्णसंस्कारं सुदिने च शुभोदये।
सर्ववर्णानि सङ्गृह्य हेमपात्रे पृथक् पृथक्।।

निर्यासचूर्णतोयेन पेषयित्वा यथोचितम्।

संसाध्य पौण्डरीकाग्निं कृत्वाऽघारं च पूर्ववत्।।
अग्नेः पश्चिमतो भागे कारयेत्स्थण्डिलं सुधीः।
आस्तीर्य नववस्त्रं च तस्योपरि सुसन्न्यसेत्।
'जीवाय नम' इत्युक्त्वा समभ्यर्च्याधिवास्य च ।।
परिस्तीर्य वैष्णवं मन्त्रं पारमात्मिकसंयुतम्।।
स्वाहान्तं चैव 'जीवाय' शतमष्टोत्तरं यजेत्।
अभिमृश्य च तद्वर्णं 'हिरण्यगर्भ' इति ब्रुवन्।।

ततश्चादाय तद्वर्णान् गर्भगेहं प्रविश्य च ।
हेमतूलिं समादाय चोत्तराभिमुखो गुरुः।।

विष्णुसूक्तं समुच्चार्य श्यामवर्णं च लेपयेत्।
'भूतो भूते' ति मन्त्रेण मुकुटादौ तु चाम्बरे।।

'तेजो वत्सव' इत्युक्त्वा समालिप्य च मन्त्रवित्।
तत्तन्मन्त्रेण देव्यादीन् दर्शनीयं सलक्षणम्।।

आलिप्य विधिना पश्चाद्धैमं श्यामं च तस्य च ।
ऊर्ध्वे तत्सन्निधानार्थं समालिप्य सलक्षणम्।।

विसृज्य शिल्पिनं पश्चात्स्थापनारम्भमाचरेत्।

**वि. १८ . ९० - ९१**

सर्ववर्णान् सङ्गृह्य, पृथक् पृथक् पात्रे कपित्थनिर्यासाम्बुना सम्पेष्य, गृहीत्वा, पौण्डरीकाग्निकुण्डं कृत्वा, आघारं हुत्वा पूर्ववत् धान्यपीठे नववस्त्रोपरि वर्णान् संन्यस्य 'जीवाय नम' इत्यभ्यर्च्य, अधिवास्य, अग्निं परिस्तीर्य, वैष्णवं विष्णुसूक्तं, पुरुषसूक्तं, पारमात्मिकं पार्षदं, हुत्वा

'जीवाय स्वाहे' त्यष्टोत्तरशतं जुहोति। 'हिरण्यगर्भ' इति वर्णमभिमृश्य आत्मसूक्तं जप्त्वा, 'अतो देवा' दिना हेमपात्रे वर्णं गृहीत्वा, तूर्यघोषणं कारयित्वा, विष्णुसूक्तं, पुरुषसूक्तं च जप्त्वा, तूलिकाग्रे वर्णमादाय, 'सहस्रशीर्षम्' इति देवस्य ललाटे संलेपयेत्। आचार्यं सम्पूजयेत्। पुण्याहं वाचयित्वा अग्निं परिस्तीर्य, शान्तिहोमं हुत्वा, अग्निं विसृज्य, पश्चात् शिल्पिनं सम्पूज्य तेन तत्तदङ्गिगनं वर्णं संलेपयेत्। अत्यन्तं दर्शनीयं यथोक्तविधिना संलेप्य पश्चादेवमेव संस्कारं कृत्वा, सुवर्णसहितं वर्णं संलेपयेत्। तस्माच्छक्तियुतं भवतीति विज्ञायते।

**ज्ञा.४९ . ८५**

श्वेतसौवर्णश्यामाञ्जनवर्णाः चतुर्युगेषु हरेः रूपम्। तस्माद्युगे युगे तत्तदर्हं ज्ञात्वा कापित्थादिना वर्णयेत्। शुद्धसंस्कारजान् वर्णान् ज्ञात्वा 'हिरण्यगर्भ' इत्यभिमृश्य गायत्र्याऽऽदाय आत्मसूक्तं जप्त्वा अतो देवादिना तूलिकाग्रेण वर्णमादाय विष्णोर्नुकादीन् जप्त्वा ललाटे 'चित्रं देवाना' मिति, आभरणे 'तेजो वत्सव' इति अम्बरे 'भूमाननोऽग्र' इति, चक्रे 'अस्मादुपास्ये' ति, पाञ्चजन्ये 'गन्धद्वारामि' ति, श्रियं, 'मेदिनी देवी' ति षड्भिः महीं, 'चिरायुषमि' ति मार्कण्डेयं, 'यतस्स्वमासीदि' ति ख्यातीशं तदर्हं, वर्णं योजयेत्। ततः शिल्पी भगवन्तं ध्यात्वा मूर्धादिपादपर्यन्तं क्रमेण भक्त्या युक्त्या तत्तच्छरीरे क्रमेण यावत् द्रव्यं मनोहरं बुद्ध्याह्लादकरं शान्तिकाद्युज्ज्वलितं कारयेत्।

**खि. १३ . ८३ -९८**

सौवर्णं पात्रमादाय शक्त्या तूलिकया युतम्।
वर्णान् तत्र समादाय साधयित्वा पृथक् पृथक्।।

विमानस्योत्तरे पार्श्वे आवसथ्यं प्रकल्प्य च ।

आघारं विधिवत्कृत्वा पुरुषसूक्तं सुहूयताम्।।

विष्णुसूक्तं ततो जप्त्वा जयादीनपि होमयेत्।
यद्देवादींस्ततो हुत्वा पारमात्मिकमेव च।।

होमं हुत्वा विधानेन व्याहृत्यन्तं पृथक् पृथक्।
सर्ववाद्यसमायुक्तं शकुनसूक्तसमन्वितम्।।

ब्रह्मघोषसमायुक्तं जयशब्दसमन्वितम्.।
देवस्य दक्षिणे स्थित्वा कुर्याच्चैवाक्षिमोचनम्।।

वर्णञ्च वामहस्तेन आदाय विधिवद् बुधः।
तूलिकां दक्षिणेनोपान्ताङ्गुष्ठानामभिः शनैः।।

श्यामवर्णं समादाय 'अतो देवादि' मुच्चरन्।
अभिमन्त्र्य तु तद्वर्णं पुरुषसूक्तं समुच्चरन्।।

ललाटादिषु सर्वत्र किञ्चिच्चाङ्गेषु सर्वतः।
योजयित्वा विधानेन देवेशं मनसा स्मरन्।।

'भूतो भूते' ष्विति प्रोच्य मकुटादिषु सर्वतः।
यद्यद्वर्णञ्चाभरणं तत्तद्वर्णं सुयोजयेत्।।

'तेजो वत्सव' इत्युक्त्वा वस्त्रेणैव सुयोजयेत्।
'नवो नव' इति वदन् नखे वर्णं सुयोजयेत्।।

'सूर्योऽसी' ति जपित्वा तु दक्षिणेऽक्ष्णि तु योजयेत्।
'चन्द्रोऽसी' ति च जप्त्वा तु वामनेत्रे च योजयेत्।।

'चित्रं देवे' ति चोक्त्वा तु हस्ते रक्तं तु योजयेत्।
काले शिल्पिनमाहूय वस्त्राभरणकुण्डलैः।।

पूजयित्वा विशेषेण यजमानयुतो गुरुः।
देवस्य दक्षिणे पार्श्वे स्थित्वा चैवोत्तरामुखः।।

शिल्पशास्त्रोक्तमार्गेण शिल्पिना लेखयेद्गुरुः।
यद्वर्णं यत्प्रदेशे तु तद्वर्णं तत्र चार्पयेत्।।

षड्वर्णान् योजयित्वा तु यथार्हं सुविचिन्त्य च।
बिम्बस्य सर्वतः कुर्यात्सर्वाङ्गं सुमनोहरम्।।

आचार्यः शिल्पिभिः सार्धं सदा शास्त्रं विचिन्त्य च।

**स. १९ . ८ - १५**

शैलस्य मृण्मयस्यापि दारवस्य ध्रुवस्य च ।।

बेरस्य वर्णसंयोगे त्वक्स्थाने वर्णमुच्यते।
सर्वाङ्गं च समाच्छाद्य तिलमात्रं घनं पुनः।।

शर्करामौक्तिकाख्यं च समालिप्य यथाविधि।
सुश्लक्ष्णं दर्शनीयं च कृत्वोर्ध्वं च तथैव तत्।।

भूषणानि च सर्वाणि यथोक्तानि च कारयेत्।
वर्णान् यथोक्तान् सङ्गृह्य सुवर्णेन च मिश्रितान्।।

[1]उक्तेनैव विधानेन तत्तदर्हं विचिन्त्य च ।
तत्तत्प्रदेशं ज्ञात्वैव तत्तद्वर्णं प्रयुज्य च ।।

शिल्पिना शिल्पशास्त्रोक्तं तत्र वै योजयेत्क्रमात्।
अथवा शर्करामेव समालिप्य पटं विना।।

मौक्तिकाख्यं समालिप्य तत्तद्वर्णांश्च योजयेत्।

1 शर्करालेपने उक्तेन।

अथवा तिलमात्रेण हीनं बिम्बं च कारयेत्।।

ऊर्ध्वे पटं विना तत्र मौक्तिकाख्यं प्रलिप्य च ।
यथोक्तानपि वर्णांश्च योजयेच्च यथाक्रमम्।।

**अ. ११**
अत [1]ऊर्ध्वं तु कर्तव्यं वर्णलेपनमुत्तमम्।
आलयस्योत्तरे कुर्यात् त्रिकोणं चाग्निकुण्डकम्।।

आघारं पूर्ववत्कृत्वा विष्णुसूक्तं सुहूयते।
ब्राह्मं रौद्रं च हुत्वा तु वैष्णवं च सुहूयते।
श्रीभूमिभ्यां तु हुत्वा तु देवानन्यान् सुहूयते।
मौक्तिकं मृदमादाय श्यामं वैराजहिंगुलम्।।

हरितामयमेवोक्तं तद्वर्णं च सुयोजयेत्।
प्रतद्विष्णुरिति मन्त्रेण देवेशं च सुहूयते।।

देवीम्यां च मुनिभ्यां च तदर्हं वर्णमाचरेत्।
तत्तन्मन्त्रं समुच्चार्य आचार्यः शिल्पिनं न्यसेत्।

### ४.१८.६३ वर्णलेपने जयादिपरिवारदेवतानां वर्णाः

**खि. १३ . ७० - ८२**
जया च सितरक्ताङ्गी दूर्वाङ्कुरनिभांशुका।।

शुकपत्राम्बरा चैव विजया हाटकप्रभा।
विन्दा हरितवर्णाङ्गी रक्तवस्त्रा प्रकीर्तिता।।

पुष्टिका कनकाभाङ्गी श्यामवस्त्रा वराङ्गना।

---

1 कल्कलेपन - पटाच्छादनानन्तरम्।

नन्दका पद्मसङ्काशा चाषपत्रनिभांशुका।।

कुमुद्वती कुमुदाभा सस्यश्यामनिभांशुका।
उत्पला चोत्पलाभाङ्गी नीलवस्त्रा वरानना।।

विशोकाऽशोकपुष्पाभा शुकपत्राम्बरा वधूः।
सर्वाभरणसंयुक्ता जयाद्यप्सरसस्सदा।।

नीलेन्दीवरसङ्काशा कुहूर्हेमनिभाम्बरा।
सिनीवाली सितश्यामा शमीपुष्पनिभाम्बरा।।

हेममिश्रसिताङ्गी च राका रक्ताम्बरप्रिया।
अनुमतिस्सितश्यामा शमीपुष्पनिभाम्बरा।।

नन्दा भद्रा जया रिक्ता पूर्णा चापि सिता मताः।
व्युत्क्रमेणैव गृह्णीयाद्वस्त्रमासमिति स्थितिः।।

सप्तमी चाष्टमी चापि हेमश्यामनिभे उभे।
विपरीतं तयोर्वस्त्रमिति शास्त्रस्य निश्चयः।।

सुभद्रा द्वादशी पीता जपापुष्पनिभाम्बरा।
कन्या त्रयोदशी रिक्ता श्यामलाम्बरसंयुता।।

सुमुखी चतुर्दशी श्यामा तप्तहेमनिभाम्बरा।
पौष्णी च पौर्णमासी स्याच्छ्यामला पीतकाम्बरा।

तिथयश्च तथैवैताः कीर्तिता दश पञ्च च ।
उक्तं वर्णं समादाय वर्णलेपनमाचरेत्।।

वर्णांश्च साधयित्वा तु यथार्हं सुविचिन्त्य च।
निर्यासेन समायुक्तान् साधयेत्तु विचक्षणः।।

### ४.१८.६४ वर्णलेपनफलम्

**खि .१३ . ९८ - १०१**

एवं यः कुरुते भक्त्या सर्वशान्तिकरं परम्।।

स्थानाभिवृद्धिदञ्चैव ग्रामादीनाञ्च वर्धनम्।
राष्ट्राभिवृद्धिदञ्चैव राज्ञश्च बलवर्धनम्।।

कर्ता निवसति स्वर्गे यावदाभूतसम्प्लवम्।
पश्चाद्विष्णुपदं याति पुनरावृत्तिवर्जितम्।।

विपरीते वैपरीत्यं भविष्यति न संशयः।
तस्मात्सर्वप्रयत्नेन शास्त्रोक्तं सर्वमाचरेत्।।

### ४.१८.६५ बिम्बार्चने वर्णादिज्ञानस्यावश्यकता

**वि. २० . १०३**

वर्णवाहनकेतुनामनक्षत्रपत्नीबीजाक्षरादीनि ज्ञात्वा अर्चयेत्। अन्यथा चेदसुरा गृह्णीयुः।

### ४.१८.६६ मृण्मयध्रुवबेरस्य सप्तधातुमयत्वरूपणम्

**अ. १२**

मृण्मयं बेरमाख्यातं सर्वप्राणिहितं भवेत्।
मृण्मयं बेरमेवोक्तं सप्तधातुमयं भवेत्।।

मध्वाज्यमिश्रितं शुक्लं शूलमस्थि प्रकल्पयेत्।
मेदश्चैवाष्टबन्धं च सिरा रज्जुसुबन्धनम्।।

कल्कोऽयं रुधिरं चैव मृण्मांसं च पटं त्वचः।
रसं वर्णं च कृत्वा तु मृद्बेरं सम्यगाचरेत्।।

एवं बेरार्चनं कुर्यात् राष्ट्रस्यैवाभिवृद्धिदम्।

**वि. १७ . ८२**

[ अत्र कल्क(रुधिर) स्थाने घटशर्करा रस(वर्ण) स्थाने जीव इति सप्तधातुष्वेकं विना कारयेच्चेदाभिचारिकं भवतीति च विशेषः। ]



# १९. शिलाशूलस्थापनम्

## ४.१९.१ शिलाशूलस्थापनार्थं प्रशस्तः कालः

**खि. ११ . ९८ - १०१**

अत ऊर्ध्वं प्रवक्ष्यामि शैलजस्थापनं क्रमात्।।

अयने चोत्तरे श्रेष्ठं दक्षिणे चापदि स्मृतम्।
मासानां फाल्गुनः श्रेष्ठो माधवः शुचिशुक्लभाक्।।

मार्गशीर्षमाघौ द्वौ निन्दितौ ब्रह्मणा पुरा।
शेषेष्वपि च कर्तव्यं त्वरितेनेति मे मतिः।।

ग्रामस्य यजमानस्य चानुकूले दिने चरेत्।

## ४.१९.२ शिलाशूलस्थापनाङ्गत्वेन अङ्कुरार्पणविधानम्

**खि. ११ . १०१, १०२**

तस्मात्तु दिवसात्पूर्वं नवमे वाथ सप्तमे।।

पञ्चमेऽहनि वा कुर्याद्विधिना चाङ्कुरार्पणम्।

## ४.१९.३ यागशालाप्रकल्पनम्

**खि. ११ . १०२ - १०८**

अङ्कुरारोपणादूर्ध्वं द्रव्याणि च समाहरेत्।।

आलयात्पुरतो वाऽपि दक्षिणे वा मनोरमे।
मण्डपं वाथ कूटं वा प्रपां वाऽपि च कारयेत्।।

यथा सौन्दर्यकं कुर्याद्यथाविभवविस्तरम्।
सर्वालङ्कारसंयुक्तं चतुर्द्वारसमन्वितम्।।

द्वारतोरणसंयुक्तं दर्भमालासमन्वितम्।
एवं शालाञ्च कृत्वा तु स्थलं सम्यक् प्रकल्प्य च ।।

अलङ्कुर्यात्ततः सम्यक् पैष्ट्या भूमिं समन्ततः।
तन्मध्ये स्थण्डिलं कुर्यात् चतुरश्रं समन्ततः।।

चतुर्हस्तप्रमाणेन हस्तमात्रोन्नतेन च।
मनोरमं कारयित्वा दृढीकरणमाचरेत्।।

अथवा कारयेद्विद्वान् बिम्बाध्यर्धप्रमाणतः।

### ४.१९.४ शिलाशूलस्य जलपञ्चगव्याद्यधिवासनम्

**खि. ११ . १०८ - ११४**

स्थापनादिवसात्पूर्वं पञ्चाहे त्रियहेऽपि वा।।

जलेऽधिवासनं कुर्याद्वस्त्रैराच्छादनं चरेत्।
महारूपं यदि स्याच्चेदालये त्वधिवासनम्।।

आलयाद्दक्षिणे चैव उत्तरे वा मनोरमे।
बिम्बाध्यर्धप्रमाणेन अवटञ्चैव खानयेत्।।

बिम्बदघ्नं च निम्नं स्याद् बिम्बानाञ्च पृथक् पृथक्।
अवटञ्चैव कृत्वा तु पुष्पाक्षतसमायुतम्।।

कुशोदकसमायुक्तं जलेन परिपूरयेत्।
एवं कृत्वा विधानेन शाययेद् बिम्बमुत्तमम्।।

खातं क्षीरोदधिं स्मृत्वा शाययीत विचक्षणः।
सम्यग्जलैः प्रपूर्यैव सर्वालङ्कारसंयुतम्।।

पञ्चगव्ये कुशोदे च एवमेवाधिवासयेत्।

**४.१९.५ यागशालायां कुण्डकल्पनम्**
**खि. ११ . ११४ - ११९**

पूर्वस्मिन्नेव दिवसे अग्निकुण्डानि कल्पयेत्।।

उत्तरे तु विमानस्य कुण्डं श्रामणकं चरेत्।
सूत्रोक्तेन विधानेन भूमियज्ञं यजेत्क्रमात्।।

पर्यग्निञ्चैव कृत्वा तु प्रोक्षयेत्पञ्चगव्यकैः।
(पुण्याहं वाचयित्वा तु गर्भगेहस्य मध्यतः)
प्राच्यामाहवनीयञ्च अन्वाहार्यञ्च दक्षिणे।।

गार्हपत्यं प्रतीच्यान्तु आवसथ्यं तथोत्तरे।
मध्ये सभ्यञ्च कृत्वा तु पूर्वोक्तेन विधानतः।।

सभ्यस्य दक्षिणे कुण्डं पौण्डरीकं समाचरेत्।
प्राच्यामाहवनीयस्य श्वभ्रं कुर्वीत यत्नतः।।

श्वभ्रस्य परितः पङ्क्तिं कारयेच्च विधानतः।

**४.१९.६ शिलाशूलस्य शायनविधानम्**
**खि. ११ . ११९ - १३३**

तरुणालयमासाद्य देवदेवं प्रणम्य च ।।

सप्तविंशतिभिर्भेदैरर्चयेच्च यथाविधि।
शूलस्थापनवत्कुर्यात्कुम्भपूजां क्रमाद् बुधः।।

बालालयस्य चाग्नेय्यां शयनं सम्प्रकल्पयेत्।
अण्डजादीनि चास्तीर्य शयनानि विधानतः।।

अलाभे त्वण्डजादीनां वस्त्राण्यास्तीर्य च क्रमात्।
दर्भानुपरि विन्यस्य पुष्पाक्षतसमन्वितम्।।

पश्चाद्देवेशमादाय विष्णुसूक्तं समुच्चरन्।
प्राङ्मुखं पश्चिमास्यं वा स्थापयित्वा विधानतः।।

अर्घ्यान्तमर्चयित्वा तु पुण्याहं वाचयेत्ततः।
बद्ध्वा प्रतिसरं पश्चात् शाययेत्तु विचक्षणः।।

'यद्वैष्णवं' समुच्चार्य शयनं हि विधीयते।
पूर्वस्यामेव रात्रौ तु प्रभाते वा विशेषतः।।

शय्यास्थं देवमादाय स्थण्डिले चैव सन्न्यसेत्।
स्थण्डिलोपरि सर्वत्र धान्यानि च समास्तरेत्।।

वस्त्रैराच्छाद्य यत्नेन दर्भानुपरि संस्तरेत्।
विष्णुसूक्तं समुच्चार्य तत्र देवं निवेशयेत्।।

यदि बेरं महारूपं यन्त्रैरेवाथ योजयेत्।
येन केन प्रकारेण योजयेदथ बुद्धिमान्।।

शयानं देवमासाद्य सर्ववाद्यसमायुतम्।
प्रदक्षिणं ततः कृत्वा स्थापयेत् श्वभ्रमध्यमे।।

आघारं विधिवत्कुर्यादग्निमानम्य चादरात्।
आघारान्ते सुहोतव्यं वैष्णवं तत्र तत्र तु।।

कुम्भैः द्वादशभिश्चैव उपस्नानसमन्वितैः।

तत्तद्द्रव्यसमायुक्तैः स्नापयेत्पुरुषोत्तमम्।।

दक्षिणे पौण्डरीकस्य शयनं सम्प्रकल्पयेत्।
पूर्वोक्तेन[1] विधानेन देवेशं शाययेत् ततः।।

पुण्याहं वाचयित्वा तु बद्ध्वा प्रतिसरं ततः।
शयने शाययेद्देवं वस्त्रञ्चोपरि संस्तरेत्।।

## ४.१९.७ शिलाशूलशायनानन्तरं होमविधानम्
## खि. ११ . १३४ - १४६

पश्चादग्निं समासाद्य परिषिच्य च पावकम्।
हुत्वा तु पौरुषं सूक्तं प्राच्यामाहवनीयके।।

विष्णुसूक्तं च हुत्वा तु त्रातारादींश्च वै हुनेत्।
अन्वाहार्ये सुहोतव्यं जयादिकमनुक्रमात्।।

गार्हपत्ये विशेषेण जुहुयाद्वैष्णवं शतम्।
रुद्रसूक्तञ्च जुहुयादावसथ्ये विशेषतः।।

हौत्रमुच्चार्य सभ्ये तु होता होत्रक्रमेण च ।
सभ्ये तु सर्वदेवत्यं जुहुयादुक्तमार्गतः।।

अब्जाग्निमध्ये जुहुयात्पारमात्मिकमेव च ।
जयादीन् जुहुयाच्चापि व्याहृत्यन्तं पृथक् पृथक्।।

आग्नेय्यां नैर्ऋते स्थाने वायव्ये चेशकोणके।
कुण्डमौपासनं कृत्वा आघारं विधिवद्यजेत्।।

1 बालालयविषये उक्तेन।

ऐन्द्राद्यैशान्यपर्यन्तं दिग्देवत्यञ्च हूयताम्।
प्रत्येकं विंशतिर्होमः व्याहृत्यन्तं पृथक् भवेत्।।

एवं रात्रौ प्रकुर्वीत रात्रिशेषं व्यपोह्य च ।
पुनः प्रभाते धर्मात्मा यजमानयुतो गुरुः।।

स्नात्वा स्नानविधानेन सूक्तानि च जपेत्क्रमात्।
उद्धृत्य शयनाद्देवं पाद्याद्यैरभिपूजयेत्।।

अन्तहोमं च जुहुयादैन्द्रादिषु यथाक्रमम्।
ततः कौतुकमादाय तरुणालयमाव्रजेत्।।

स्थापयेद् ब्रह्मभागे तु विष्णुसूक्तं समुच्चरन्।
यागस्थानं समासाद्य अग्निमासाद्य सर्वतः।।

वैष्णवं विष्णुसूक्तं च पञ्चाग्निषु यथाक्रमम्।
जुहुयात्तु विधानेन सर्वशान्तिर्भविष्यति।।

अन्तहोमञ्च हुत्वा तु प्रागादिषु यथाक्रमम्।
सर्वान् देवान् विसृज्यैव आदित्यं सम्प्रणम्य च।।

### ४.१९.८ गर्भगृहे शिलाशूलानां स्थापनस्थानानि

**खि. ११ . १४७ , १४८**

गर्भालयं प्रविश्याथ कल्पयित्वा पदानि तु।
दैविकञ्च त्रिधा कृत्वा प्राच्यां द्वौ तु व्यपोह्य च ।
पश्चिमे चैकभागे तु स्थानकं स्थापयेदथ।।

द्वितीये वा स्थापयेत्तु -------------।
देवस्य कुड्ययोर्मध्ये देव्योः स्थानमुदीर्यते।
कुड्यकौतुकयोर्मध्ये मुन्योः स्थानमुदाहृतम्।।

## ४.१९.९ ध्रुवबेरपीठे रत्नन्यासपूर्वकं शिलाशूलस्थापनम्
## खि. ११ . १४९ - १६१

रत्नन्यासं च कृत्वा तु पूर्वोक्तविधिनैव च।
शयनाद्देवमादाय युक्तियुक्तः समाहितः।।

गर्भालयं प्रविश्याथ विष्णुसूक्तं समुच्चरन्।
जप्त्वा तु पौरुषं सूक्तं देवं संस्थाप्य शैलजम्।।

देव्यौ च स्थापयेत्पश्चात् मुनी चैव ततः परम्।
तत्तन्मन्त्रं च जप्त्वा तु स्थापयेत्तु विचक्षणः।।

बीजाक्षराणि सन्न्यस्येच्छैलजे तु विशेषतः।
आसीनमपि देवेशं किञ्चिन्मानुषमाश्रिते।।

आसनोपरि रत्नानां न्यासं तत्र समाचरेत्।
पश्चाच्छिल्पिनमाहूय पूजयित्वा विशेषतः।।

शिल्पशास्त्रोक्तविधिना कारायेत्सुदृढं ततः।
शर्करादिक्रमात्कृत्वा पश्चाद्वर्णं सुयोजयेत्।।

वर्णहीनं ध्रुवं कुर्याद्विनश्यति न संशयः।
पूर्वं पीठं सुसन्न्यस्य रत्नन्यासं समाचरेत्।।

रत्नं पीठोपरि न्यसेत्पूर्वोक्तविधिना ततः।
अन्तः सुषिरसंयुक्ते तले रत्नान्यथार्पयेत्।।

सहजं यदि पीठं स्यात्तले रत्नानि चार्पयेत्।
येन केन प्रकारेण योजयित्वाऽथ शिल्पिना।।

दृष्टिं सौम्याञ्च कृत्वा तु देवदेवस्य यत्नतः।
शर्करादिक्रमं कृत्वा पटं सम्यक् सुयोजयेत्।।

-------------------------------

ब्रह्मस्थाने प्रतिष्ठाप्य नित्यं सम्यक् समर्चयेत्।

### ४.१९.१० शिलाशूलस्थापनानन्तरं शर्करालेपनम्

**स. १९ . १ - ५**

पूर्वोक्तेन विधानेन स्थापितं तु शिलामयम्।
सर्वत्र यवमात्रेण विहीनं तत्प्रमाणतः।।

घटशर्करयोर्मध्ये पट्टिकापि च वर्णकैः।
तद्यवं पूरयेत्तत्र तत्प्रमाणं यथोचितम्।।

शर्करां चापि संसाध्य यथायोगं यथाविधि।
निर्यासेन कपित्थस्य युक्तेनैवाम्बुना सह।।

सम्पिष्टां शर्करां स्निग्धामालिप्य च यथाक्रमम्।
अंशुकाद्यैश्च सुश्लक्ष्णं दर्शनीयं च कारयेत्।।

शिलोर्ध्वं यवमात्रं तु शर्करालेपनं स्मृतम्।
कारयित्वा विधानेन चित्रे चित्रार्धके तथा।।

### ४.१९.११ दारुजध्रुवबेरस्य शर्करालेपनादिक्रिया

**स. १९ . १६ - १८**

दारवं ध्रुवबेरं च यथोक्तेनैव दारुणा।
कारयित्वा विधानेन स्थापयित्वा च पूर्ववत्।।

शर्करालेपनाद्याश्च शिलावत्कारयेत्क्रियाः।
शैलजे दारवे चापि बिम्बे चैष विधिः स्मृतः।।

शिल्पिना कारयित्वैवं प्रतिष्ठामारभेत्पुनः।

### ४.१९.१२ शर्करालेपनानन्तरं पटाच्छादनम्

**स. १९ . ६ - ८**

नवं च मृदु सूक्ष्मं च तान्तवं वस्त्रमाहरेत्।
अग्रं पादं विदित्वा तन्मुखं पृष्ठं तथैव च ।।

अग्रं मूर्ध्नि च मूर्धादि मुखमूर्ध्वं तथैव च ।
पृष्ठमन्तस्तस्था पादे पुच्छं पादान्तमेव च।।

योजयेत्पटमेवं वै विपरीतं न चाचरेत्।

### ४.१९.१३ शैलजध्रुवबेरस्य वर्णसंस्कारः

**स. १३ . ४९ - ५३**

घटशर्करया पश्चात् संयोज्य च विधानवित्।।

देवस्योक्तेन मार्गेण वर्णकैश्चित्रतां नयेत्।
सर्ववर्णसमायुक्तं साङ्गोपाङ्गं च सुन्दरम्।।

अथवा कारयेद्विद्वांश्चक्रशङ्खौ च साश्रयौ।
पादाश्रयं वा कुर्वीत चित्रार्थं वा भवेद्यथा।।

शिलामयं दारुमयं ध्रुवं कुर्वन् विधानवित्।
चित्रवर्णयुतं कुर्यात् ध्रुवं तद्वच्च कौतुकम्।।

चित्रवर्णयुतानेव कारयेत सपीठकान्।

**खि. ११ . १५९ , १६०**

अथवा कारयेद्विद्वान् शर्करोपरि वर्णकैः।
शैलजञ्च ध्रुवस्थाने वर्णहीनं न कारयेत्।।

एकत्रैव विमानस्य एका चेच्छैलजा पुरा ?।
मानोन्मानप्रमाणेन व्यक्तं सर्वत्र कारयेत्।।

### ४.१९.१४ कौतुकस्थापनस्थानम्

**खि. ११ . १६१ , १६२**

बेरस्य[1] दक्षिणे पार्श्वे उत्सवार्थन्तु कौतुकम्।।

---

1 ध्रुवबेरस्य इति यावत्।

नवधा मार्गमालोक्य कौतुकं तु सुसम्भरेत्।
अर्चयित्वा यथाशक्ति त्रिकालं तु विशेषतः।।

**४.१९.१५ एकबेरप्रतिष्ठायाम् अर्चनक्रमः**

**खि. ११ . १६३ - १६९**

एकबेरप्रतिष्ठा चेत् त्रिकालं स्नापनं चरेत्।
तैलेनाभ्यञ्जनं कृत्वा पश्चात्स्नापनमाचरेत्।।

पञ्चविंशतिभिर्भेदैरर्चयेच्च यथाक्रमम्।
एकबेरं तु यत्रैव स्नानं तत्रैव कारयेत्।।

सन्न्यसेत्कलशांस्तत्र प्रमुखे चोत्तरेऽपि वा।
स्नपनोक्तविधानेन कलशन्यासमाचरेत्।।

मध्ये शुद्धोदकं न्यस्य उदधान्यां विशेषतः।
आदाय कलशान् सर्वान् गर्भगेहं प्रविश्य च।।

देवस्य दक्षिणे भागे स्थित्वा चैवोत्तरामुखः।
स्नपनोक्तैस्तथा मन्त्रैः मृदाद्यैरभिषेचयेत्।।

अन्ते हारिद्रचूर्णेन स्नापयित्वा ततः परम्।
शुद्धोदैरभिषिञ्चेत्तु शोधयित्वा विशेषतः।।

प्लोतेन विमृजेत्पश्चात् वस्त्रालङ्कारमाचरेत्।
अलङ्कारैरलङ्कृत्य पञ्चविंशतिविग्रहैः।
अर्चयित्वा यथाशास्त्रं देवेशं प्रणमेत्ततः।।



## २०. ध्रुवबेरकिरीटादिकल्पनम्

### ४.२०.१ ध्रुवबेरे किरीटाद्याभरणानां मानम्

ज्ञा. ५२ . ९२ , ९३

किरीटायतं विंशत्यङ्गुलं मूलं शिरः परिणाहं मध्यं त्रयस्त्रिंशदङ्गुलमग्रमष्टादशाङ्गुलं पद्मकौस्तुभयोः पञ्चाङ्गुलं मध्ये मकरकूटं पार्श्वयोः पत्रपूरितं विस्तारं यवाधिकमिन्द्रियं भूतकोल्काकायामं समात्राङ्गुलं मकरकोल्काकायामं तदर्धविस्तारं मकरस्कन्धारूढबालकनिष्क्रान्तव्यालसंयुतं श्याममभिषेकं विलक्षणं रत्नाढ्यक्षेपणालङ्कृतमग्रे रक्तपद्मयुतं तद् विस्तारं द्व्यङ्गुलं मुक्तादामविभूषितमृजुतिर्यक्कर्णसूत्राभ्यां पार्श्वयोः मध्ये वज्रबन्धाकृतिं शिरश्चक्रायामं द्विरसं प्राणायामं द्वियवं वा विस्तारं रुद्रनेत्रमेवं सर्वरत्नमयं द्वियवं वा जाज्वल्यमानं सहस्रादित्यप्रभं किरीटं कारयेत्।

कुण्डले मकराकारे सार्धाङ्गुलकोलकायामे तदर्धोच्छ्रयसमन्विते मुखनिष्क्रान्तसिंहाम्ये(स्ये ?) पादप्रलम्बितमुक्ताद (दा ?)माढ्ये रत्नोज्ज्वले श्रीवत्सहारं पञ्चाननमध्याननविस्तारं पावकं द्विगुणायतं पद्मरागप्रबन्धाढ्यं वृत्तं तद्बाह्ये चतुरश्रं रत्नबन्धविचित्रितं पार्श्वयोः सूक्तवेशकमौक्तिकावलिशोभितं पार्श्वमुखविस्तारं कोलकं शेषं युक्त्याऽतिमनोहरं रत्नैर्दीप्यमानं कारयेत्। मुक्ताकलापसंयुक्तमूरुमध्यविलम्बितं कोलकविस्तृतमपरं मुखायमं रसं तस्य विस्तारं चतुर्यवाधिकं कोलकं केयूरविस्तारमर्धाङ्गुलायामं मुखं द्विमात्रार्धं मकारायामं तदर्धं तारमारूढबालमकरास्योद्भूतसिंहकोलकवृत्तवेशक्तनिधिद्वयसमारूढं कोलकायामं तस्य पावकं षण्मुखं रत्नकटकमुखरत्नविचित्रितं नाभेर्भूताङ्गुलादूर्ध्वे चोदरबन्धनं तन्मध्यविस्तारं

पावकं त्रिगुणायतं रत्नविचित्रितं मुक्तादामविभूषितं शेषं युक्त्या करोति। कटिबन्धमष्टाननं विस्तारं त्र्यङ्गुलं मध्ये कृत्रिममुखं कलापपाशविचित्रितं नानारत्ननिबन्धनं तदधस्तात् त्रीणि सूत्राणि कल्पयेत्। एवमेवान्यत्र विस्तृतं ज्ञात्वा आभरणान्यलङ्कारयुक्तानि कारयेत्।

शङ्खचक्रायामं चतुर्ज्वालायुतं चक्रास्यविस्तारं कोलकं चतुर्दशारं मध्यग्रन्थियुतं शङ्खमध्यमविस्तारं प्राणायामं ज्वालायामं भागमेवमनुक्तं तत्र ज्ञात्वा लक्षणयुतं रम्यं कारयेदिति विज्ञायते।

## ४.२०.२ ध्रुवबेरस्य आभरणाम्बरायुधेषु लक्षणानुसरणस्यावश्यकता

**वि. २२ . १५२**

किरीटाद्याभरणेषु लक्षणहीनेषु धनधान्यविनाशः, अम्बरे विरुद्धे लक्षण-हीने च दारिद्र्यं, शङ्खचक्राद्यायुधेषु लक्षणहीनेषु चोरशत्रुवृद्धिः।



# २१. ध्रुवबेरपीठादिकल्पनम्

## ४.२१.१ ध्रुवबेरपीठादीनामुपादानद्रव्यम्

**नि. १७**

यद्द्रव्येण कृतं बिम्बं तद्द्रव्येण यथाविधि।
पीठं प्रभां च छत्रं च कल्पयेत विचक्षणः।।

कुर्यादुत्कृष्टलोहेन दोषो नास्ति न संशयः।

**स. २४. ३५ , ३६**

**स. १८ .४५**

[ यदि शिलया ध्रुवबेरं स्यात् देवपादपीठं शिलयैव योजयेदिति निर्दिश्यत इति विशेषः। ]

**खि. ८. १२३, १२४**

[ अत्र शिलामयं विमानं चेत् आसनध्रुवबेरपद्मपीठमपि च शिलामयम् इति निर्दिश्यत इति विशेषः। ]

## ४.२१.२ ध्रुवबेरपीठस्य मानम्

**वि. १५. ७१ ; २२. १५२**

तद्बेरं पीठोत्तुङ्गं बेरोत्तुङ्गात् तुरीयांशं गुणांशैकांशं वा चतुरश्रं वृत्तं पद्माकारं वा तदुत्सेधं सप्तभागं कृत्वाधःपद्मं चतुरंशम्, ऊर्ध्वपद्मं त्र्यंशम्, ऊर्ध्वाधः षोडशदलैर्युक्तं देवपादौ परितश्चाष्टाऽङ्गुलं नीत्वा एवं पीठं कारयेत्।

ध्रुवबेरस्य पीठोत्सेधं द्वारोत्सेधस्य अष्टांशैकांशं, षड्भागैकांशं वा, भुवङ्गोत्सेधसमम्, अध्यर्धं, द्विगुणं वा, समवृतं, पद्माकारं, चतुरश्रं

त्रिमेखलं वा कारयेत्। अथवा कौतुकपीठात् पश्चिमभागं पीठोत्सेधमानेन समस्थलं कृत्वा देवीभ्यां सह देवं संस्थापयेत्।

**स. २४ . ३३ - ३५**

बेरायामं त्रिधा कुर्यात्तस्यैकांशः समुच्छ्रयः।।

वृत्तं वा चतुरश्रं वा पीठं कुर्याद्विधानतः।
आयामं तत्समं कुर्यात् विस्तारश्च समस्तथा।।

तलं च पादमानेन स्मृतमध्यर्धमेव च ।

**नि. १७**

**स. २७. ६५ - ६९**

पीठानुरूपमर्चायाः ब्रह्मस्थानं यथाविधि।।

शिलाभिरिष्टकाभिर्वा तालमात्रसमुच्छ्रयम् ।

प्रतिष्ठाङ्गुलमुत्सेधं विस्तारोऽपि त्रिभिस्तथा।।

वेदीभिश्च समायुक्तं पीठं तु चतुरश्रकम्।

कारयेदथवा तत्र भुवङ्गसममेव वा।।

**प्र. ८ . ६ - ८**

गर्भागारत्रिभागैकं चतुरश्रं त्रिमेखलम्।
तस्योर्ध्ववेदिविस्तारं चतुरङ्गुलमेव हि।।
उत्सेधं तस्य चार्धं तु परितश्चतुरङ्गुलम्।
विस्तारोत्सेधमानं तु मध्ये निम्नं षडङ्गुलम्।।
उदीच्यां तु प्रतीच्यां तु वारिमार्गं तु कारयेत्।

**खि. १६. ११८, ११९**

अर्चापीठप्रमाणं स्यात् प्रतिदिक् चतुरङ्गुलम् ।

ऊर्ध्ववेद्यास्तु विस्तारो द्वादशाङ्गुलमुन्नतिः।।

भागावनतमेकैकं भागविस्तारसंयुतम् ।

एवं त्रिवेदिसहितमर्चनापीठमाचरेत्।।

**क्रि. ६ . ३२ , ३३**

केचित्पद्मादधः पीठं पृथगिच्छन्ति सत्तमाः।।

स्थापिते तु पृथक् कृत्वा न पुनर्योजयेत् सुधीः।

## ४.२१.३ ध्रुवबेरपीठं परितः स्नानवेदिनिर्माणम्

**वि. १५. ७१ , ७२**

स्नानवेदिं तत्परितः षोडशाङ्गुलां गर्भागारत्रिभागैकभागां वा चतुरश्रां द्विमेखलां तदूर्ध्ववेदिविस्तारं भागं तदर्धमुत्सेधं, तत्परितश्चतुरङ्गुलविस्तारोत्सेधामधोवेदिं तन्मध्ये षडङ्गुलमवगाढं पञ्चाङ्गुलं चतुरङ्गुलं वा प्राच्यामुदीच्यां वा वारिमार्गं चतुरङ्गुलं मात्राङ्गुलेनैकवेदिं कारयेत्। अथवा पीठं विना शिलाभिरिष्टकाभिर्वा वेदिं कृत्वा तन्मध्ये सुदृढं संस्थापयेत् इति केचित्। एवं ध्रुवार्चाबेरस्थापनम्। अन्यत्सर्वं युक्त्या कारयेत्।

## ४.२१.४ ध्रुवबेरपीठस्य लक्षणानुसरणावश्यकता

**वि. २२ . १५२**

पीठे लक्षणहीने स्थाननाशो धनक्षयश्च।

**अ.२२**

अधिके व्याधिपीडा च हीने च मरणं ध्रुवम्।।

### ४.२१.५ ध्रुवबेरपीठेन सह प्रभायाः संयोजनम्

**क्रि. ६. ३१, ३२**

एवं बेराणि कृत्वैव शिल्पशास्त्रोक्तमार्गतः।
प्रभां पीठं च कृत्वैव तत्तदुक्तप्रकारतः।।

नवरत्नानि सन्न्यस्य पीठे सङ्घातमाचरेत्।

### ४.२१.६ ध्रुवबेरपद्मपीठस्य अधःपीठेन सह सङ्घातकरणे प्रतिष्ठाकालः

**क्रि. ६. ३२, ३३**

केचित्पद्मादधः पीठं पृथगिच्छन्ति सत्तमाः।।

स्थापिते तु पृथक् कृत्वा न पुनर्योजयेत् सुधीः।
अमन्त्रकाक्ष्युन्मेषान्ते प्रतिष्ठां पुनराचरेत्।।

### ४.२१.७ ध्रुवबेरपीठेन सह प्रभायाः संयोजनप्रयोगः

**नि. १८**

आघारं विधिवत्कृत्वा प्रधानं चैव हूयताम्।।

तस्याधिदेवमन्त्रश्च आज्येनैवाष्टकृत्यचेत् (द्यजेत्?)।
शालिपीठे च सिक्तं च समादाय सुसन्न्यसेत्।।

आपोहिष्ठेति च प्रोक्ष्य तन्मन्त्रेणाभिमर्शयेत्।
शिल्पिना सर्वसौन्दर्यं कारयेल्लक्षणान्वितम्।।

तत्र बेरक्रियाकाले सहकर्म समाचरेत्।
पद्मोर्ध्वोपर्यशक्तश्च जटिबन्धं सुयोजयेत्।।

अथ वक्ष्ये पृथक् चैव शृणुध्वं मुनिसत्तमाः।
अङ्कुरानर्पणं चैव अधिवासनमारभेत्।।

तद्दिनात्पूर्वरात्रौ तु चाहरेदधिवासनम्।
वास्तुहोमं ततः कृत्वा पर्यग्निकरणं चरेत्।।

औपासनाग्निमाधाय आघारान्ते विशेषतः।
तन्मन्त्रेणैव संस्नाप्य पञ्चभिः कलशैरपि।।

तन्मन्त्रं च समावर्त्य चाष्टविंशतिकृद्यजेत्।
शालिपीठं समास्तीर्य नववस्त्रं समास्तरेत्।

कुशपुष्पान् समास्तीर्य पीठादीनपि विन्यसेत्।
अधिदेवं समभ्यर्च्य चाष्टविग्रहमार्गतः।।

प्रभायामपि मार्ताण्डं व (ह्निं ?) चैव तु पीठके।
छत्रे सोमं समभ्यर्च्य प्रतिसरं बन्धयेत्पुनः।।

उत्तराच्छादनं कृत्वा तन्मन्त्रेणैव सर्वशः।
प्रभाते समनुप्राप्ते सर्वालङ्कारसंयुतम्।।

शुभे मुहूर्ते सम्प्राप्ते देवेशं मनसा स्मरेत्।
प्रभादीनादाय कृत्वा तु वैष्णवं मन्त्रमुच्चरन्।।

विष्णुसूक्तं समुच्चार्य तत्तत्स्थाने तु योजयेत्।
राजवद्विग्रहैरेव चार्चयेद्देवमव्ययम्।।

अलङ्कारप्रभामेव(?) तप्तहाटकसंयुतम्।
नानावल्लीसमाकारनवरत्नोपशोभितम्।।

एतेन विधिना कृत्वा प्रभां चैव सुयोजयेत्।

### ४.२१.८ प्रभामण्डलस्य लक्षणानुसरणावश्यकता

**वि. २२ . १५२**

प्रभामण्डले लक्षणहीने कीर्तिदीप्तिविनाशश्च भवति।

## ४.२१.९ स्थानकध्रुवबेरपद्मपीठस्य मानम्

**स. १८ . ३४ - ३७**

भुवङ्गस्य समं प्रोक्तं स्थानके पीठमुन्नतम्।।

भुवङ्गोपरि तालं वा ध्रुवपीठस्य चोन्नतिः।
ध्रुवबेरस्य पादस्य प्रतिदिक् चतुरङ्गुलम्।।

विस्तारमूर्ध्ववेद्यास्तु पद्मपत्रदलैर्युतम्।
मण्डलं चतुरश्रं वा पीठं कुर्यात्तदर्हकम्।।

त्रिवेदिसहितं कुर्यात् विस्तारं तु यथार्हकम्।
एवं स्थानकपीठं स्यात् ------------।।

**य. ११ . ३१ - ३४**

अथ पीठोदयं पश्चात् स्थानकस्य विशेषतः।
भुवङ्गस्य समं वाथ अध्यर्धं द्विगुणं तु वा।।

परितः पादयोस्तस्य नीत्वा वै भागमङ्गुलम्।
चतुरश्रं सुवृत्तं वा दलैष्षोडशभिर्युतम्।।

कौतुकस्य तु पीठाद्वा भित्यन्तं सकलं समम् ।
पीठोत्तुङ्गप्रमाणेन स्थलं कृत्वा दृढं पुनः।।

तृतीयांशैकांशकं वाथ चतुर्थांशैकांशकं तु वा।
ध्रुवार्चायां विशेषेण अश्रं वा वृत्तमेव वा।।

**प्र. ८ . १, २**

[ अत्र द्विगुणमित्यस्य स्थाने त्रिगुणमिति विशेषः। ]

**प्र. ८. ४ , ५**

चतुर्थैकांशकं वापि तृतीयैकांशकं तु वा ।

ध्रुवार्चायां विशेषेण पीठमेवं प्रकल्पयेत्।।

चतुरश्रं सुवृत्तं वा दलैष्षोडशभिर्युतम्।
स्थानकं चासनं वापि यानकं वा समाचरेत्।।

**वि. १९ . ९४**

स्थानकस्य पीठोच्चं बेरोदयं द्वारोदयं वा अष्टभागं षड्भागं वा कृत्वा एकांशं भुवङ्गसमम् अध्यर्धं द्विगुणं वा समवृत्तं पद्माकारं देवपादं परितः चतुरङ्गुलं षडङ्गुलमष्टाङ्गुलं वा देहलब्धाङ्गुलेन नीत्वा तदूर्ध्वं षोडशदलैर्युक्तं कारयेत्। तस्मात् एकाङ्गुलहीनं देव्योः पीठं कारयेत्।

**वि. १९ . ९४ , ९५**

अथवा कौतुकस्यार्चापीठस्य पश्चिमभागं दैवमानुषपैशाचपदान्तं पीठोत्सेधमानेन समस्थलं कृत्वा तदूर्ध्वं देवीभ्यां सह देवं यथोक्तदेशे संस्थाप्य तत्स्थले कौतुकादीन् संस्थापयेत्।

**अ. १२**

**खि. ८ . ११६ - ११८**

पद्मपीठं तु सहजमासने स्थानकेऽपि वा।।

बेरायामस्य षड्भागादेकभागेन कारयेत्।
ध्रुवबेरस्य पादस्य प्रतिदिक् चतुरङ्गुलम्।।

विस्तार ऊर्ध्ववेद्याः स्यात् पद्मपत्रयुजस्ततः।
एवं स्थानकमुद्दिष्टम् -----------------

**अ.१२**

**ज्ञा. ३६. ६७**

स्थानके द्वादशांशं पद्माकारं तदर्धोच्छ्रयम्।

### ४.२१.१० स्थानकध्रुवबेरपीठस्य उत्तमादित्रैविध्यम्

**ज्ञा. ३६ . ६७**

--------- ध्रुवायामषड्भागं पीठमुत्तमम्। अर्धाधिकं द्विभागं मध्यममधमं द्विभागमित्यङ्गिराः।

### ४.२१.११ स्थानकध्रुवबेरस्य पद्मसिंहासनकल्पनम्

**अ. २२**

सिंहासनस्य मध्ये तु पद्मपीठं सुकारयेत्।
पद्मपीठं च कृत्वा तु पद्मपीठे स्थितं भवेत्।।

### ४.२१.१२ आसनध्रुवबेरस्य सिंहासनमानम्

**स. १८ . ३७ -३९**

-------------- आसीने च प्रवक्ष्यते।।

ध्रुवबेरं त्रिधा कृत्वा चैकं सिंहासनोच्छ्रयम्।
तदर्धं विस्तृतं प्रोक्तमुपधानेन संयुतम्।।

पादाश्रयणपीठेन पद्माकारेण संयुतम्।
यथा सौन्दर्यकं कुर्याच्छेषं युक्त्या समाचरेत्।।

**अ. २२**

तद्द्वारं च त्रिधा कृत्वा द्विभागं संव्यपोह्य च ।।

एकं भागोच्छ्रयं कृत्वा सिंहासनसमुच्छ्रयम्।
सिंहासनस्य मध्ये तु आसनं च सुकारयेत्।।

### ४.२१.१३ आसनध्रुवबेरस्य सिंहासनत्रैविध्यम् उत्तमादिभेदेन

**वि. १९ . ९७**

सिंहासनोत्सेधं द्वारोत्सेधं बेरोत्सेधं वा द्वादशभागं कृत्वा षडंशमुत्तमम्। पञ्चाशं मध्यमम्, चतुरंशमधमम्, द्विपञ्चाशदङ्गुलमुत्तमम्, षट्चत्वारिंशदङ्गुलं मध्यमम्, चत्वारिंशदङ्गुलमधमम्।

### ४.२१.१४ आसनध्रुवबेरस्य पद्मपीठमानम्

**खि. ८. ११८ - १२०**

--------------- आसने तु प्रवक्ष्यते।।

द्वारं कृत्वा तु षड्भागं त्रिभागं पीठमुच्यते।
अर्धयुक्तं त्रिभागं वा मध्यमं कारयेद् बुधः।।

द्विभागमधमं पीठमेवमुच्छ्राय उच्यते।
बेरायामस्य चोच्छ्रायं बेरपीठस्य कल्पयेत्।।

**वि. १९ . ९७**

सिंहासनस्य तुरीयांशं पद्मासनस्योत्सेधं षडंशं कृत्वा एकांशं तदाधारं कम्पं त्र्यंशम् अधोदलं द्व्यंशमूर्ध्वदलमूर्ध्वाधः शतपत्रैस्संयुक्तम् एवं पद्मासनं स्यात् ।

### ४.२१.१५ ध्रुवबेरस्य पद्मसिंहासनस्य मानम्

**वि. १९ . ९७**

सिंहासनस्योत्सेधं त्रयोविंशतिभागं कृत्वा एकांशं पादुकं दलमेकांशं कम्पमेकांशं, चतुरंशा जगती, एकांशं पद्मं, ध्रुगेकांशम् एकांशं दलं, त्र्यंशं कुमुदम्, अम्बुजमेकांशम्, एकांशं कम्पं चतुरंशं कण्ठं सिंहैर्युक्तं, तदूर्ध्वे चैकांशं

कम्पं, पद्ममेकांशं द्व्यंशा महापट्टिका चेत्येतत् पद्मसिंहासनं स्यात् ।

**ज्ञा. ३६ . ६७**

गर्भागारत्रिभागैकमासने पीठविस्तारं द्वारायामषड्भागमुच्छ्रयं तत् पादहीनं देव्योः पीठोच्छ्रयमृत्विग्भागं विभज्य एकेन पादं त्रिभिर्जगतीं द्वाभ्यां कुमुदमेकेन केसरं पञ्चांशैः कर्णिकां पट्टिके द्वाभ्यामेवं सिंहासनं विधानेन कल्पयेत्।

### ४.२१.१६ आसनध्रुवबेरस्य भद्रसिंहासनम्

**वि. १९ . ९८**

अथवा भद्रसिंहासनोत्सेधं षोडशभागं कृत्वा एकांशमुपानत्, चतुरंशा जगती, त्र्यंशं कुमुदम्, एकांशं कम्पं, चतुरंशं कण्ठं सिंहैर्युक्तं, तदूर्ध्वे चैकांशं कम्पं, द्व्यंशा महापट्टिका च एतत् भद्रासनं स्यात्। द्वयोरुभौ पार्श्वौ सिंहौ समुद्वहन्तौ च कारयेत्। आसनस्थदेवस्य जानूपरिष्टात् केशान्तं मध्यगं जान्वोः पार्श्वयोः बाह्वोश्च मध्यगं सूत्रमृजुं प्रसारयेत्। तत्रानुक्तं सर्वं शिल्पशास्त्रोक्तविधिना कारयेत्।

### ४.२१.१७ भोगासनध्रुवबेरस्य सिंहासनमानम्

**य. १५ . ४१ - ४४**

सिंहासनस्य चोत्सेधं प्रवक्ष्यामि पृथक् शृणु।।

गर्भद्वारसमोत्सेधं भानुभागं विभज्य च ।
रसांशमुत्तमं प्रोक्तं भूतांशं मध्यमं विदुः।।

कनिष्ठमाश्रमांशं स्यात्कारयेत्तद्यथोचितम्।
गर्भे तदायतं सर्वं लक्षणं विस्तृतं मया ।।

मानाधिकारे यत्प्रोक्तं तथा सिंहासनं चरेत्।

### ४.२१.१८ शयनध्रुवबेरस्य पीठमानम्

**स. १८ . ४० - ४४**

बेरायामचतुर्भागः शयनोच्छ्राय उच्यते।
तत्तुरीयांशकोत्सेधः शिरोभागो विशेषतः।।

पार्श्वयोरुभयोश्चैव समं तत्र व्यपोह्य च ।
शेषभागं त्रिधावेष्ट्य पञ्चवर्णसमायुतम्।।

अधः पुच्छं शिरश्चोर्ध्वं सर्पदेहं तु वेष्टयेत्।
तदुत्सङ्गतले देवं शयानं सम्प्रकल्पयेत्।।

फणानां पञ्चकं कुर्यात् विषवेगसमायुतम्।
एवमेव प्रकुर्वीत स्थानासनशयानकम्।।

पीठं कृत्वा प्रयत्नेन स्थापनारम्भमाचरेत्।

**अ. २२**

द्वारस्य पञ्चभागानां त्रिभागं संव्यपोह्य च ।
शेषं द्विभागं कृत्वा तु शयनस्योच्छ्रयं भवेत्।।

पञ्चसप्तनवैर्वापि शिरोभागे फणं भवेत्।
पादपार्श्वे तथा पुच्छं त्रिवृतं शयनं भवेत्।।

**ज्ञा. ३६ . ६७**

आयामं द्वात्रिंशांशत्रिभागं शयनोच्छ्रयं चतुर्भागं विस्तारं शेषं युक्त्या कारयेत्।



# २२. ध्रुवबेरस्य आयादिपरीक्षा

## ४.२२.१ ध्रुवबेरस्य आयादिभिः शुभाशुभहेतुत्वपरीक्षा

### वि. २२ . १५०, १५१

आयव्ययनक्षत्रयोनिवारांशकैः षड्भिः शुभाशुभं परीक्षेत। तदुत्सेधं त्रिगुणीकृत्य वसुभिर्हरेत्, तच्छेषमायम्। उत्सेधं चतुर्गुणीकृत्य पञ्चभिर्हरेत्, तच्छेषं व्ययम्। उत्सेधे वसुभिर्गुणिते सप्तविंशतिभाजिते शिष्टं च नक्षत्रम्। तुरगाद्यं यजमानानुकूलर्क्षमाहरेत्। उत्सेधं त्रिगुणीकृत्य वसुभिर्हरेत्, ध्वजधूमसिंह-श्ववृषभगर्दभगजवायसा एतेऽष्टयोनयः, पूर्वः शुभोऽपरोऽशुभः। उत्सेधे नवगुणिते मुनिभिर्हृते शिष्टं वारम्। उत्सेधे चतुर्भिर्गुणिते नवभिर्हृते शिष्टमंशकम्। तस्करभुक्तिशक्तिवित्तावनीपालक्लीबनिर्भीतिदरिद्रप्रेष्या नवांशकाः। एषां शुभांशकं चेत् शुभावहं भवति। एतैः सर्वैः शुभं चेत् शुभावहं भवति। तस्माच्छुभाधिकमशुभहीनं बेरमाहरेत्।

आयादीनां फलम्- बेरस्योद्देशमानेन हीने तद्ग्रामयजमानयोराशुविनाशाय भवति। निर्देशमानेन विहीने राजराष्ट्रविनाशाय भवति। बेरमायविहीनं व्ययाधिकं यजमानस्यार्थहानिं राज्ञः शत्रुवृद्धिं च कुर्यात्। आयाधिकं व्ययक्षीणं सर्वसम्पत्करं भवति। नक्षत्रं यजमाननक्षत्रादिबेरनक्षत्रान्तं बेरनक्षत्रादियजमाननक्षत्रान्तं वा गणयेत्। तृतीयपञ्चमसप्तमानि हित्वा अन्यानि शुभानि भवन्ति। ध्वजः कीर्तिं दीप्तिं वृद्धिं, धूमोऽर्थनाशं, सिंहः शत्रुजयं, श्वा व्याधिं, वृषोऽर्थलाभं, गर्दभो बन्धुवियोगं, गजः सर्वसिद्धिं, वायसोऽपत्यहानिं कुर्यात्। वारेषु आदित्याङ्गारकशनैश्चरान् हित्वा अन्ये शुभा भवन्ति। अशुभाश्च योगबलयुक्ताश्चेन्मुख्या भवन्ति। अंशकेषु तस्करं षण्डं दरिद्रं प्रेष्यं च त्यक्त्वान्ये शुभावहा भवन्ति।

**य. १७ . १८ - २७**

अग्निना वर्धयेत्तुङ्गमायं स्याद्वसुभिर्हृतम्।
आश्रमेण गुणीकृत्य व्ययं नागैर्हृतं पुनः।।

चतुर्भिर्गुणितं सूत्रैर्ह्रासं तच्छेषमंशकम्।
त्रिगुणीकृत्य तन्नागैर्हृतं तद्योनिरुच्यते।।

वसुभिर्गुणितं कृत्वा क्षयेत्तद्वसुभिर्दिनम्।
तन्नन्दैर्गुणितं वारैर्हृतं वारं तथा तिथिः।।

आयाधिक्यं व्ययं क्षीणं सर्वसम्पच्छुभावहम्।
व्ययाधिक्येऽप्यनर्थः स्यात्समं स्यादिति केचन।।

तस्करो भुक्तिशक्ती च वित्तं चावनिपालकम्।
क्लीबाभीतिर्दरिद्रं च प्रेष्यं नन्दांशकं विदुः।।

दरिद्रं तस्करं षण्डं प्रेष्यं त्यक्त्वा शुभावहम्।
ध्वजो धूमश्च सिंहश्च श्वा वृषो गर्दभस्तथा।।

गजश्च वायसश्चेति अष्टधा योनयः क्रमात्।
पूर्वं पूर्वं शुभं प्रोक्तमशुभं त्वपरं तथा।।

ध्वजे च वृषभे सिंहे महासिद्धिकरो भवेत्।
कर्तुर्दिनं समारभ्य प्रतिमाया दिनान्तकम्।।

गणयेद्विपरीतं वा विपत्प्रत्यरनैधनाः।
नार्क्यर्काङ्गारवाराश्च शुभयोगं हरेद्यदि?।।

अन्यथा नाचरेत्सर्वं शुभार्थं शुभमाचरेत्।

## नि. १३

उत्तमानेषु सर्वेषु एकद्वित्रिचतुर्यवान्।
न्यूनाधिक्यव्यये चैव आयादीनि समानयेत्।
इष्टोन्मानं समीक्ष्यैव ग्रामस्यैवानुकूलतः।।

राज्ञश्च यजमानस्य आनुकूल्यं समाचरेत्।
हित्वा मानाङ्गुलेनैव अष्टभिर्गुणितं बुधः।।

द्वादशेन हृतं शेषमायं स्याद् गुणितं ग्रहैः।
अवतारहृते शेषं व्ययमेतत्प्रचक्षते।।

वर्धयेदग्निना शेषं योनिः स्याद्वसुभिर्हृते।
अम्भसां गुणितं शेषं सूत्रेणैव हृतांशकम्।।

आयाधिक्ये धनं विद्यात् व्ययाधिक्ये धनक्षयः।
ध्वजधूमौ च सिंहश्च श्वा वृषो गर्दभस्तथा।।

इभकाकौ क्रमेणैव योनयस्समुदाहृताः।
एषु पूर्वं शुभं विद्यादन्योन्यं शुभदाः स्मृताः।।

कर्तुर्वा नामनक्षत्रात् ऋक्षाद्वा वा विशेषतः।
आमानोदयनक्षत्राज्जन्मादिक्रमयोगतः।।

पुनः पुनस्समुच्चार्य वर्जयेदशुभं सुधीः।
जन्मतश्च प्रजावृद्धिः सर्वसम्पत्करं विदुः।।

विपद्विपत्करं तस्य क्षेमं रक्षा भवेत्ततः।
प्रत्यरं नाशकृत्तस्य साधकं शुभदं भवेत्।।

वधस्तत्प्राणहानिस्स्यान्मैत्रं परममैत्रकम्।
दृष्टे तस्याप्यदृष्टे च सर्वकामफलप्रदम्।।

तस्यच्छेत्सूरिसूर्यारं पार्श्वेन्यच्चाङ्गमं भवेत्( ?)।

तस्करो भुक्तिशक्तिस्तु धनं राजा च विक्लवः।।

निर्भयं च विपच्चैव समृद्धिश्चैव च क्रमात् ।
अंशकं त्विति जानीयात्तस्करं विक्लवो विपत्।।

परित्यज्य त्रयं चान्यत् गृह्णीयाच्छुभदं ततः।

**स. २४ . ५३ - ६२**

आहृत्याष्टभिरुन्मानमर्हे भक्तावशेषिते।
एतदायमिति प्रोक्तं तेन युक्तं तु वृद्धिदम्।।

बृहन्मानं समाहृत्य हृत्वा तु दशभिः पुनः।
शिष्टमेतद् व्ययं प्रोक्तं व्ययत्वे न धनं भवेत्।।

उन्मानमग्रमाहृत्य भक्त्या तद्वसुभिः पुनः।
शिष्टं योनिरिति प्रोक्तः शुभं योनौ तु वृद्धये।।

ध्वजो धूमश्च सिंहश्च श्वा वृषो गर्दभो गजः।
काकश्चेत्यष्ट सम्प्रोक्ता योनयस्तदनुक्रमात् ।।

पूर्वं पूर्वं शुभं प्रोक्तमपरं त्वशुभं तथा।
वर्धितेऽष्टभिरुन्माने सप्तविंशतिभाजिते।।

भक्तव्ययं च तच्छिष्टे नक्षत्रमिति चोच्यते।
यजमानानुकूलं च यद्दिनं तत् समाहरेत्।।

वर्धितेऽष्टभिरुन्मानं त्रिंशता तद्विभाजिते।
शिष्टं तिथिरिति प्रोक्तं प्रथमादिक्रमेण च।।

हृत्वा नवभिरुन्मानं सप्तभिस्तद्विभाजिते।
शिष्टं वारमिति प्रोक्तं शुभवारं समाहरेत्।।

हृत्वा चतुर्भिरुन्मानं भाजिते कर्मभिः पुनः।
तच्छिष्टमंशकं प्रोक्तं गृहणीयादंशकं शुभम्।।

सामान्यतो दिने चैव ज्ञेयं तत्र शुभाशुभम्।

**क्रि .६ . २ - ८**

परिहृत्याङ्गुलिच्छेदं वृद्ध्या हान्याऽथवा पुनः।।
योज्यं त्याज्यं क्रमादेव युग्मायुग्माङ्गुलैः परम्।
(योज्यं युग्माङ्गुलादूर्ध्वे त्याज्यमेकाङ्गुलात्परम्।)
आयव्ययर्क्षवाराष्टयोन्यंशमशुभं त्यजेत्।।

बेरोदयेऽष्टनन्दाग्निहते चाष्टार्कभाजिते।
धनर्णयोनयः प्रोक्ताः आयाधिक्यं शुभं भवेत्।।

उत्सेधेऽष्टगुणे चैव सप्तविंशतिभाजिते।
शिष्टमश्वयुगाद्यन्तु नक्षत्रं च चतुर्गुणे।।

हृते नन्दैस्तदुद्दिष्टमंशकं तस्करादिकम्।
भुक्तिशक्तिधनोर्वीशक्लीबाभीत्यधनाह्वयाः।।

प्रेष्यश्चैव क्रमात्तेषां स्वनामसदृशं फलम्।
वारं नवगुणे तुङ्गे सूर्याद्यं सप्तभिर्हृते।।

शुभं च शुभवाराश्च सिद्धामृतवराह्वयाः।
ग्रामकर्तृनृपर्क्षाणां नामर्क्षानुगुणं तथा।।

**प्र. ९ . २८ - ३४**

आयव्ययादिऋक्षांश्च (शाः ?) योनिः पश्चाद्विधीयते।।

बेरोदयं त्रिगुणितं शिष्टमायं न(ना ?)गे हृते।
चतुर्भिर्गुणितं सप्त सौरवारादिकं दिनम्।।

बेरोच्चमष्टगुणितं सप्तविंशतिभिर्हृतम्।
शिष्टमश्वादिभं विन्द्यात् तच्छेषं स्याच्चतुर्गुणम्।।

रन्ध्रे हृते नवांशं तच्छेषं भांशयुगैर्हृतम्।
बेरोदयं त्रिगुणितं योनिः स्यादष्टभिर्हृतम्।।
आयाधिक्ये शुभं प्रोक्तं ऋणवृद्धिर्व्ययाधिके।
वारेषु सौरिसूर्यारैर्विनाऽन्ये शुभदाः स्मृताः।।
तस्करं भुक्तिशक्ती च धनं राज्यं क्लीबादि च ।
निर्हृत्य चाऽधनं प्रेष्यं तन्नामसदृशं फलम्।।
नामकर्तृनृपर्क्षाद्या नामर्क्षानुगुणं भवेत्।

**वा. ४**

अतः परमिदं प्रोक्तम् आयादीनां शुभं बुधाः[1] ।
पृथग्वक्ष्ये विशेषेण शृणुध्वं शास्त्रचोदितम्।।

ऊर्ध्वमानं विनिश्चित्य ध्रुवबेरं विशेषतः।
हस्तं चैकादशानां तु एकादीनां यथाक्रमम्।।

यथावित्तानुसारेण यजमानस्य चेच्छया।
महाबेरं ततः स्थाप्यमन्यद्बेरमथापि वा ।।

ऊर्ध्वमानाङ्गुलीन् वक्ष्ये गणयेद्देशिकोत्तमः।
आयं चाथ व्ययं चैव योनिमृक्षं तु वारकम्।।

1.अत्र वासाधिकारे आयादिषण्मानैः सह पक्षराशिरूपं मानद्वयमधिकमुच्यत इति विशेषः।

अशकं राशिपक्षं तु क्रमाद्वक्ष्ये मया शृणु।
तदुत्सेधाङ्गुलं सर्वं मुनिसङ्ख्या तु वर्धयेत्।।

भास्करस्य हरेर्ज्ञात्वा तच्छेषं त्वायमुच्यते।
तन्निश्शेषं यदि स्यात्तु तस्यायं पुष्कलं भवेत्।।

तदङ्गुलं नवैर्गुण्यं नाडी हत्वा मयाहतः।
तच्छेषान्यतरं स्मृत्वा पुनश्चैव त्रिगुण्यते।।

दिक्सङ्ख्याहतशेषं स्यात् योनिर्भूत्वा समाहितः।
पुनश्चाहिगुणेनैव सप्तविंशतिभिर्हतम्।।

तच्छेषं ----------पुनर्नन्दाख्यगुण्यते।
सप्तभिर्हतशेषं स्यात् भान्वादीन् वारमुच्यते।।

वेदाख्यां तस्य गुण्यं तु हत्वा तस्यांशकं तथा।
तच्छेषस्यांशकं विद्यात् हत्वा तद्गुण्यते बुधः।।

ततश्चैकादशं गुण्यं दशपञ्चादिना हतम्।
शेषं यदि भवेत्सर्वं सितपक्षमिहोच्यते।।

तस्य भूताख्याभिर्गुण्यं पक्षस्यैव हुनेत् तथा।
तस्याश्शेषस्सितैः पक्षदशम्यन्तं प्रगृह्य च।।

तस्य पञ्चेन्द्रियैर्गुण्यं द्वादशैर्हतशेषकम्।
मेषादिराशीनां स्मृत्वा विपरीतं न कारयेत्।।



## २३. बेराणां नव स्थानविधयः

### ४.२३.० बेराणां नव वृत्तयः

**खि. १४ . २५४ - २५७**

अतः परं प्रवक्ष्यामि नवस्थानविधिं क्रमात्।
ऋज्वागतं तु विज्ञेयं पूर्वं तत्र प्रभाषितम्।।

तथार्धज्यागतं ज्ञेयं साचीकृतमथोच्यते।
अध्यर्धाक्षं ततो ज्ञेयं पार्श्वागतमतः परम्।।

ऋज्वागतपरावृत्तमर्धज्यागतमेव च।
साचीकृतपरावृत्तम् अध्यर्धाक्षं ततः परम्।।

नवेति वृत्तयो ज्ञेयाः विभागात् परिकीर्तिताः।
अन्योन्यापेक्षया तत्र वृत्तयस्तु पृथक् पृथक्।।

### ४.२३.१ ऋज्वागतवृत्तेः लक्षणम्

**खि. १४ . २५९ - २६३**

ऋज्वागतं प्रवक्ष्यामि पूर्वं तत्र विनिर्गतम्।।

हिक्काचरणयोर्मध्ये ऊर्ध्वं नाभेस्तथैव च।
एषां सूत्रनिविष्टानां भवेदृज्वागतं पुनः।।

स्थितस्तत्र निषण्णो वा तत्तु ऋज्वागतं भवेत्।
कर्णमूलाक्षयोः पार्श्वे वृत्तं तत्र त्रियङ्गुलम्।।

कर्णयोरङ्गुली क्षीणा भवेत् कर्णौ निबन्धयेत्।

मानोन्मानौ समौ ज्ञेयौ पार्श्वौ तत्र समन्ततः।।

अङ्गानि सममालेख्य कर्तव्यं शास्त्रतो भवेत्।
एवमृज्वागतं ज्ञेयं वृत्तं तत्र विशेषतः।।

## ४.२३.२ अर्धज्यागतवृत्तेर्लक्षणम्

**खि. १४ . २६४ - २६६**

अतः परं प्रवक्ष्यामि अर्धज्यागतमेव च ।
कर्णमूलात् क्षयः कार्यः परभागाद् द्विगोलकम्।।

अनुगण्डे ललाटे च कलार्धं तु क्षयं नयेत्।
बाहूरसोश्च पार्श्वे च ऊरौ कट्योस्तथैव च।।

हीनं तु कोलकं सर्वं समन्तात् परिकीर्तितम्।
अर्धज्यागतमित्याहुः वृत्तं तत्र मनोहरम्।।

## ४.२३.३ साचीकृतवृत्तेर्लक्षणम्

**खि. १४ . २६७ - २६९**

साचीकृतं प्रवक्ष्यामि यथावदनुपूर्वशः।
कर्णमूलात् क्षयः कार्यः परः पञ्चाङ्गुलान्वितः।।

नेत्रे कपोले केशान्ते हनू कर्णौ तथैव च ।
सर्वत्रापि क्षयं विद्यात् शरीरेऽपि क्षयं तथा।।

संस्थानात् कक्षयोर्ज्ञेयं पञ्चाङ्गुलसमन्वितम्।
अविरोधेन कर्तव्यः प्रत्यङ्गेषु क्षयं तथा।।

### ४.२३.४ अध्यर्धाक्षवृत्तेर्लक्षणम्

**खि. १४ . २७० , २७१**

अध्यर्धाक्षं तु विज्ञेयं शृणुध्वं तत्समासतः।
कर्णमूलात् क्षयः कार्यः परभागे त्रिगोलकम्।।

भ्रुवोर्ललाटे नेत्रे च हनौ चापि तथैव च।
स्तनात् क्षयः क्षये ज्ञेयः षडङ्गुलमिति स्मृतम्।।

### ४.२३.५ पार्श्वागतपरावृत्तेर्लक्षणम्

**खि. १४ . २७२**

पार्श्वमध्ये तु विज्ञेयं मध्यसूत्रं प्रतिष्ठितम्।
पार्श्वागतं तु विज्ञेयं पार्श्वमेवागतं ततः।।

### ४.२३.६ ऋज्वागतपरावृत्तेर्लक्षणम्

**खि. १४ . २७३ , २७४**

प्रवक्ष्यामि यथाप्रोक्तं परावृत्तं समन्ततः।
पृष्ठमध्ये तु तं विद्यान्मध्यसूत्रं प्रतिष्ठितम्।।

ऋज्वागतपरावृत्तमिति तद्वै प्रकीर्तितम्।

### ४.२३.७ अर्धज्यागतपरावृत्तेर्लक्षणम्

**खि. १४ . २७४ , २७५**

अर्धज्यागतवृत्तं तत् क्षयं यच्चतुरङ्गुलम्।।

अर्धज्यागतपूर्वं तु परावृत्तमितीर्यते।

### ४.२३.८ साचीकृतपरावृत्तेर्लक्षणम्

**खि. १४ . २७५**

साचीकृतपरावृत्ते साचीकृतसमं क्षयम्।।

### ४.२३.९ अध्यर्धाक्षपरावृत्तेर्लक्षणम्

**खि. १४ . २७६**

अध्यर्धाक्षपरावृत्ते अध्यर्धात् क्षयसङ्क्षयम्।

### ४.२३.१० चतुःषष्टिसङ्ख्याका अवान्तरवृत्तयः

**खि. १४ . २७८ - २८०**

अष्ट वृत्त्यन्तराणि स्युः परावृत्तं समाश्रिताः।
अष्टौ तत्र परावृत्ता अर्धज्यागतमाश्रिताः।।

साचीकृतपरावृत्तास्त्वष्टौ भेदाः प्रकीर्तिताः।
परावृत्ताः तथाष्टौ तु अध्यर्धाक्षसमाश्रिताः।।

चतुःषष्टिः समाख्याता वृत्तिभेदाः समन्ततः।
वृत्त्यन्तराणि सूक्ष्माणि कर्तव्यानि पृथक् पृथक्।।

### ४.२३.११ ऋजुवृत्तयः तिस्त्रः

**खि. १४. २५८ , २५९**

ऋजवस्त्रिविधाः ज्ञेयाः विभागं शृणुतर्षयः।
ऋज्वागतपरावृत्तं पार्श्वागतमिहोच्यते।।

उद्योतपरभागश्च इत्येते त्रिविधाः स्मृताः।

### ४.२३.१२ उद्योतपरभागस्थादिवृत्तिषु व्यस्तमिश्रविवेकः

**खि. १४ . २८१ - ३०३**

व्यस्तं मिश्रमिति प्रोक्तं सर्वं द्विविधमुच्यते।
अनुक्तमानुपूर्व्येण सर्वतः परिकीर्त्यते।।

उद्योतपरभागस्थं व्यस्तं तु परिकीर्तितम्।

व्यस्तं तत्रैव विज्ञेयमध्यर्धाक्षमुदाहृतम्।।

एते त्रयोऽपि विज्ञेयाः व्यस्ता वृत्तिविभागशः।
मिश्रं तस्य विभागं तु शृणुध्वं मुनिसत्तमाः।।

साचीकृतं चाध्यर्धाक्षमर्धज्यागतमेव च।
तत्र ता मिश्रिताः प्रोक्ता ऋज्वागतसमाश्रिताः।।

ऋज्वागतं वा विज्ञेयं साचीकृतमथोच्यते।
अध्यर्धाक्षं भवेद्व्यस्तं पार्श्वागतमतः परम्।।

शिरसा मिश्रिताः प्रोक्ता अर्धज्यागतमाश्रिताः।
चतस्रस्तास्तु विज्ञेया वृत्तयो मिश्रसंज्ञिताः।।

पार्श्वागतं वा विज्ञेयमर्धज्यागतमेव वा।
अध्यर्धाक्षं परावृत्तं साचीकृतमतः परम्।।

साचीकृतपरावृत्तं वृत्तयः परिकीर्तिताः।
शिरसा मिश्रिताः प्रोक्ताः पार्श्वागतसमाश्रिताः।।

एते त्रयोऽपि विज्ञेया वृत्तयः परिकीर्तिताः।
उद्योतपरभागस्थं परावृत्तमथोच्यते।।

अर्धज्यागतपृष्ठं तु व्यस्तमित्यभिधीयते।

उद्योतपरभागस्थं परावृत्तमिहोच्यते।
साचीकृतपरावृत्तं मिश्रमित्यभिधीयते।।

अध्यर्धाक्षपरावृत्तं साचीकृतपरोऽपि वा।
अर्धज्यागतपृष्ठं वा वृत्तयः परिकीर्तिताः।।

ऋज्वागतपरावृत्तं शिरसा मिश्रिताः स्मृताः।

एते त्रयोऽपि विज्ञेया विभागाः परिकीर्तिताः।।

साचीकृतपरावृत्ता अध्यर्धाक्षपरास्तथा।
ऋज्वागतपराश्चापि वृत्तयः परिकीर्तिताः।।

शिरसा मिश्रिताः प्रोक्ताः साचीकृतपराश्रिताः।
एते त्रयोऽपि विज्ञेया विभागाः परिकीर्तिताः।।

पार्श्वागतं चाध्यर्धाक्षं साचीकृतपरं तु वा।
अर्धज्यागतपृष्ठं तु शिरसा मिश्रिताः स्मृताः।।

एते त्रयोऽपि विज्ञेयाः विभागाः परिकीर्तिताः।
अध्यर्धाक्षपरावृत्तं साचीकृतपरं तु वा।।

अर्धज्यागतपृष्ठं तु वृत्तयः परिकीर्तिताः।
शिरसा मिश्रिताः प्रोक्ता अध्यर्धाक्षं समाश्रिताः।।

एते त्रयोऽपि विज्ञेया विभागाः परिकीर्तिताः।
पार्श्वागतं चाध्यर्धाक्षं साचीकृतपरं तु वा।।

अर्धज्यागतपृष्ठं तु वृत्तयः परिकीर्तिताः।
शिरसा मिश्रिताः प्रोक्ता अध्यर्धाक्षं समाश्रिताः।।

चतस्रस्तास्तु विज्ञेया वृत्तयः स्युर्विभागशः।
एवं नवभ्यो वृत्तिभ्यः स्थानमन्यन्न विद्यते।।

तिर्यक्ष्वपि च सर्वेषु विविधाकृतिजातिषु।
स्थावरेष्वपि सर्वेषु यज्ञसंज्ञान्वितेषु वै।।

आसनेषु च हर्म्येषु मण्डपेषु गृहेषु च ।
शयनेष्वपि यानेषु शस्त्रादिषु च युक्तितः।।

विग्रहाणां प्रमाणेन मानोन्मानादिकल्पनम्।
अनुमानप्रमाणेन[1] कुर्याद् वृत्तिं यथाक्रमम्।।



1 युक्त्या इत्यर्थः

# २४. गर्भगृहे ध्रुवबेरस्थापनस्थानम्

## ४.२४.१ ध्रुवबेरस्थापनार्थं गर्भगृहे पदकल्पनम्

**स. १८. २१ - २७**

चित्रं वाप्यर्धचित्रं वा बेरं लक्षणसंयुतम्।।

कारयित्वा विधानेन स्थापनारम्भमाचरेत्।
पदानि गर्भगेहे तु कृत्वा तानि विधानतः।।

षट्पञ्चाशद्विशतिकं पदं सूत्रेण सूचयेत्।
पिष्टतोययुतेनैव रेखाः सप्तदशैव हि।।

प्रागग्राश्चोत्तराग्राश्च तावत्सूत्रसमा यथा।
तन्मध्ये षोडशपदं ब्रह्मभागं प्रचक्षते।।

तस्यैव परितो दैवं पदत्रयसमावृतम्।
चतुष्पदाधिकाशीति दैविकं पदमुच्यते।।

तस्यापि परितो भागं पदद्वयसमावृतम्।
मानुष्यं च विजानीयात् पदं षण्णवति द्विजाः।।

तस्यापि परितश्चैव पदेनैकेन संवृतम्।
पदं षष्टिस्तु पैशाचं भित्तिपार्श्वे समावृतम्।।

**खि.११. ३६ - ४१ ; वि. १५ . ७२ ; य. १२. २५ - २७ ; प्र. ८. ८ - १२ ; अ. २२**

## ४.२४.२ गर्भगृहे ध्रुवबेरस्थापनस्थानविभागः

**य. १२ . ४७ , ४८**

गर्भद्वारं ततो धीमान् सप्तांशं संविभज्य च ।

तन्मध्यमं रसांशे तु तद्विभज्यान्तरं विधेः।।

सूत्रं स्याद्वामजं विष्णोस्तस्मात्तस्मिन् हरेर्बुधः।
परसूत्रं लम्बितव्यं स्थापयेद्विहिते पदे।।

## ४.२४.३ ध्रुवबेरस्थापनस्थाने मध्यस्थाननिर्णयः

**स. १८ . ३३ ,३४**

ब्रह्मसूत्रप्रमाणं तु यवमात्रमिति स्मृतम्।
तद्यवं च द्विधा कृत्वा दक्षिणार्धे यथा भवेत्।।

देवस्य मध्यसूत्रं तत् तथैव स्थापयेद्धरिम्।

## ४.२४.४ गर्भगृहे स्थानकादिध्रुवबेरस्य स्थापनस्थानानि

**वि. १९ . ९२**

ध्रुवबेरेष्विष्टं मानं विनिश्चित्य सलक्षणं बेरं कृत्वा गर्भागारे कृते पदे दैविके स्थानकं यानकं च किञ्चिन्मानुषमाश्रित्य, दैविके चासनं, किञ्चिद्दैवमाश्रित्य मानुषांशे शयनं संस्थापयेत्।

**स. १८.२९, ३०**

दैविकं च त्रिधा कृत्वा द्विभागं पुरतस्त्यजेत्।
अपरे स्थानकं स्थाप्यं मध्यभागेऽथवा पुनः।।

दैवमानुषयोर्मध्ये चासनं सम्प्रकल्पयेत्।

**खि. ८ . १२१, १२२**

दैविकं च त्रिधा कृत्वा पूर्वभागं व्यपोह्य च ।
पश्चिमे स्थानकं कुर्यान्मध्यमे वा विधानतः।।

किञ्चिन्मानुषमाश्रित्य दैविके चासनं चरेत्।

### ४.२४.५ गर्भगृहे स्थानकध्रुवबेरस्य स्थापनस्थानम्

**स. १४ . १६ , १७**

गर्भालयं प्रविश्याथ पदानि परिकल्प्य च ।
दैविकांशं त्रिधा कृत्वा द्व्यशं पूर्वं व्यपोह्य च ।।

पश्चिमे चैकभागे तु स्थापयेत स्थितं हरिम्।
अथवा तद्विभागे वा स्थापयेदिति निश्चयः।।

**ज्ञा. ५३ . ९३ ; खि. ११. ४० , ४१ ; अ. १२ ; वि १५. ७२**

**य. १२. २८**

### ४.२४.६ गर्भगृहे आसनध्रुवबेरस्य स्थापनस्थानम्

**ज्ञा. ५३ . ९३**

दैविकभागं त्रिधा कृत्वा दैविकभागयुतमानुष्ये स्थाप्यमासनम्।

**स. १४ . २१, २२ ; वि. १५ . ७२ ; अ. २२**

**य. १२.२८**

### ४.२४.७ गर्भगृहे शयनध्रुवबेरस्य स्थापनस्थानम्

**ज्ञा. ५३ . ९४**

किञ्चिद्दैविकभागयुतं मानुष्ये स्थापनीयं शयनम्।

**वि. १५ . ७२ ; अ. २२ ; स. १८. ३० ; खि. ११. ४१**

**नि. १२ ; प्र. ८.१२**

**य. १२. २९ , ३०**

[मानुषे शयनं पीठं स्थापयेदिति विशेषः।]

### ४.२४.८ दीर्घशालाविमाने गर्भगृहे शयनध्रुवबेरस्य स्थापनस्थानम्

**स. १८ . ३१, ३२**

दीर्घशालाविमानं चैद्दैविके सर्वसंयुते।
मानुष्ये शयनं कुर्यादर्हानार्हौ विचिन्त्य च ।।

मायां संह्लादिनीं चैव किष्किन्धं सुन्दरं क्रमात्।
पैशाचे च पदे कुर्याद् व्यजनेन समायुतम्।।

### ४.२४.९ ध्रुवबेरपद्मपीठस्य गर्भगृहे स्थापनस्थानम्

**खि. ८ . १२२, १२३**

पश्चिमे ब्रह्मभागे तु पद्मपीठं प्रकल्पयेत्।।

प्रसारितस्य पादस्य शास्त्रोक्तविधिना बुधैः।

### ४.२४.१० गर्भगृहे कौतुकबेरस्य स्थापनस्थानम्

**क्रि. ५ . ९१**

ब्राह्मे तत्कौतुकं स्थाप्यमिति पूर्वजदर्शनम्।

**वि. १५ . ७२ ; य.१२. २७ ; स. १८. २८**

### ४.२४.११ गर्भगृहे कौतुकादिबेरस्य स्थापनस्थानम्

**ज्ञा. ५७ . १००**

ब्राह्मे कौतुकं दक्षिणे स्नापनं वामे चौत्सवम्।

### ४.२४.१२ गर्भगृहे कौतुकयुक्तध्रुवबेरस्य स्थापनस्थानम्

**क्रि. ५ . ९१**

ध्रुवे कौतुकसंयुक्ते मानुषे स्थापयेदिति।

### ४.२४.१३ ध्रुवार्चास्थापने गर्भागारे पदकल्पनम्

**वि.१५ . ७२**

------------------------- ध्रुवार्चा चेत् गर्भागारं सप्तसप्तविभागं कृत्वा तन्मध्ये चैकं पदं ब्राह्मं, तत्परितश्चाष्टभागं दैविकं, तद्बाह्ये षोडशभागं मानुषं तद्बहिश्चतुर्विंशतिभागं पैशाचं भवति।

**य.१२. ३० - ३१ ; प्र. ८. १२ - १४**

### ४.२४.१४ ध्रुवार्चनबेरस्य गर्भगृहे स्थापनस्थानम्

**क्रि. ५ . २७५**

एकबेरप्रतिष्ठा चेत् ब्राह्मे संस्थापयेत् पदे।

### ४.२४.१५ योगवीरादीनां ध्रुवार्चाबेराणां गर्भगृहे स्थापनस्थानानि

**य. १२ . ३२, ३३**

स्थापयेद्योगवीरौ च ब्रह्मस्थाने विशेषतः।
दैवमानुषयोर्मध्ये भोगमेव ध्रुवार्चनम्।।

पैशाचे विरहं बेरं स्थापयेत्क्रमशः सुधीः।

**नि. १५ ; प्र. ८ . १४ , १६**

### ४.२४.१६ गर्भगृहे शान्तिकादिध्रुवबेराणां स्थापनस्थानम्

**वि. १५ . ७२**

ब्रह्मस्थाने स्थापयेत् शान्तिकं, दैविके पौष्टिकं, देवमानुषयोर्मध्ये जयदम्। एवं ध्रुवार्चां संस्थापयेत्।

**प्र. ८ . १३ ; य. १२ . ३२**



# २५. कौतुकादिबेरकल्पनम्

## ४.२५.१ गर्भगृहे स्थाप्यानां चलबेराणां सङ्ख्या

**ज्ञा. ५७ . १००**

कौतुकोत्सवार्चाभेदेन त्रीणि बिम्बान्यागारे स्थापयेत्। ------------
एकस्मिन्नालये चैकमेव वपुरिति केचिद्वदन्ति। एवं प्रकल्पितं बिम्बं विधिनाऽधिवास्य स्थापयेदिति कश्यपः।

**स. २४ . ४**

**ज्ञा. ५४ . ९५**

यथैकस्मिन् गृहे त्रेताग्नीन् कल्पयति तथैकस्मिन् विमाने कौतुकमौत्सवमर्चेति त्रीणि बेराणि कल्पयेत्। प्रधानार्चनार्थमुत्सवार्थं स्नपनार्थञ्चैतद् बेराणि।

## ४.२५.२ कौतुकादिबेरत्रयालाभे प्रतिष्ठाक्रमः

**ज्ञा. ५४ . ९५**

प्रथमप्रतिष्ठायां त्रयाणामप्यलाभे कौतुकबिम्बमेकमेव प्रतिष्ठाप्य पश्चादन्ययोर्लाभे प्रतिष्ठापनं कर्तव्यम्। ध्रुवबेरेण कौतुकबिम्बस्यैकस्यैव सम्बन्धो नान्येषाम्। तस्मात्तदेकमेव स्थापयेदित्येके।

## ४.२५.३ कौतुकबेरस्य पर्यायशब्दाः

**स. २४ . १**

अर्चा च कौतुकं प्राणो वर एकार्थवाचकाः।।

## ४.२५.४ अर्चापदस्य निर्वचनम्

**स. २४ . २**

अर्च्यत्वाज्जलपुष्पाद्यैः कीर्तितार्चेति सूरिभिः।

### ४.२५.५ कौतुकपदस्य निर्वचनम्

**स. २४ . २**

सर्वमङ्गलकारित्वात् कौतुकं ह्यभिधीयते।।

### ४.२५.६ प्राणपदस्य निर्वचनम्

**स. २४ . ३**

सर्वेषां प्राणभूतत्वात् प्राण इत्युच्यते बुधैः।

### ४.२५.७ वरपदस्य निर्वचनम्

**स. २४ . ३**

श्रीभूदेव्योर्वरत्वाच्च वर इत्यपि कीर्तितः।।

### ४.२५.८ कौतुकबेरस्य उपादानद्रव्याणि

**वि. २२ . १४८**

दारुशिलाताम्ररजतहेमरत्नानि कौतुकद्रव्याणि।

**स. २४ . ४, ५ ; अ. १३ ; य. १७ . १, २**

**ज्ञा. ५६ . ९७**

मणिलोहोपलदारूणि कौतुकार्हद्रव्याणि।

### ४.२५.९ स्थावरकौतुकबेरस्य उपादानद्रव्यम्

**अ. १३**

शैलजं चार्चनाबिम्बं स्वस्थाने स्थावरं भवेत्।।

### ४.२५.१० कौतुकबेरस्य उपादानभूता मणयः

**ज्ञा. ५६ . ९७,९८**

वज्रमौक्तिकपद्मरागेन्द्रनीलगोमेधवैडूर्यमरकतप्रवालपुष्यकान्तचन्द्र-

कान्तसूर्यकान्तलोहिताक्षोत्पलसौगन्धिकस्फटिककुरुविन्दमहानीलाश्चेत्येते सप्तदश शुद्धजातयो मणयो भवन्ति। उपलभेदाश्चानेके तत्रेन्द्रनील-वैदूर्यपद्मरागमरकतप्रवालवज्राश्चेत्येते चोत्तमाः। सौगन्धिकपुष्यकान्त चन्द्रकान्तसूर्यकान्तोत्पला मध्यमाः। शेषाः कनिष्ठाः। तत्रेन्द्रनीलमयं श्रेष्ठतमं बेरस्येत्याह भगवान् पुरुषः। तस्मात् परं नापरमस्ति किञ्चित्।

**४.२५.११ कौतुकबेरस्य उपादानद्रव्यव्यवस्था**

**अ. १३**

यद्द्रव्यं मूलबेरं तु तद्द्रव्यं चार्चना भवेत्।।

**४.२५.१२ मृदः कौतुकबिम्बादीनामुपादानत्वनिषेधः**

**स. २५ . २४ - २६**

मृण्मयं च न कुर्वीत कौतुकाद्यं च सर्वदा।।

मृण्मयाः कौतुकाद्यास्तु सर्वलोकभयावहाः।
उक्तद्रव्येण विधिना कारयेद् बिम्बमुत्तमम्।।

कुर्यादेवाक्षिमोक्षान्तं शिल्पी कर्म यथाक्रमम्।

**४.२५.१३ रत्नमयस्य कौतुकबेरस्य मानोन्माननिषेधः**

**अ. १३**

रत्नेन कृतबिम्बस्य मानोन्मानं न विद्यते ।

**४.२५.१४ कौतुकबेरस्य सौवर्णादिनिर्मितस्य मानवैगुण्ये अनुमतिः**

**अ. १३**

सौवर्णं रजतं ताम्रमल्पमानं न दोषकृत्।

**४.२५.१५ दारुजकौतुकबेरफलम्**

**वि. २२ . १४८**

पुत्रार्थी दारवम्।

**४.२५.१६ शैलजकौतुकबेरफलम्**

**वि. २२ . १४८**

आयुष्कामः शैलम्।

**४.२५.१७ ताम्रजकौतुकबेरफलम्**

**वि. २२ . १४८**

समृद्धिकामस्ताम्रजम्।

**४.२५.१८ राजतकौतुकबेरफलम्**

**वि. २२ . १४८**

श्रीकामो राजतम्।

**४.२५.१९ सौवर्णकौतुकबेरफलम्**

**वि. २२ . १४८**

ऐहिकामुष्मिककामः सौवर्णम्।

**४.२५.२० रत्नजकौतुकबेरफलम्**

**वि. २२ . १४८**

सद्यः सायुज्यकामो रत्नजं कारयेत्।

**४.२५.२१ लोहनिर्मितकौतुकबेरस्य उत्तमादित्रैविध्यम्**

**अ. १३**

चतुर्भुजं पूजने श्रेष्ठं ध्रुवाद्रूपं तु मध्यमम्।।

ध्रुवात् हीनं चाधमं विद्याल्लोहबिम्बार्चनं भवेत्।

### ४.२५.२२ कौतुकबेरोपादानद्रव्येषु फलोत्पादनानुरोधेन तारतम्यम्

**वि. २२. १४८**

दारवाच्छतगुणं शैलं, शैलात् ताम्रं सहस्रगुणं, ताम्राद्रजतमयुतगुणं, रजताद्धेममर्बुदगुणं, रुक्मजं सर्वसाधनं, रत्नजमनन्तफलं भवति।

**अ. १३**

दारुमेकफलं विद्यात् दशमं शैलजं भवेत्।।
ताम्रजं च शतं विद्याद्रजतं च सहस्रकम्।।
सौवर्णं लक्षमेकं तु अनन्तं रत्नमेव च।

### ४.२५.२३ दारुजशैलजकौतुकबेरयोः सत्वे उत्सवबेरस्यानियतत्वम्

**अ. १३**

दारुशैलजबिम्बं तदौत्सवं च विना चरेत्।

### ४.२५.२४ कौतुकबेरस्य अवस्थाननियमः

**स. २४ . २२ - २५**

ध्रुवबेरानुरूपं तु कौतुकं कारयेत् तथा।।

ध्रुवे स्थिते स्थितं कुर्याद्बिम्बं तत्कौतुकं तथा।
आसीने चासनं वापि स्थानकं वा विधानतः।।

ध्रुवबेरे शयानेऽपि शयनं प्रतिषिध्यते।
शयने चासने वापि स्थानकं वा समाचरेत्।।

ध्रुवे स्थिते समासीनं कौतुकं नैव कारयेत्।

**ज्ञा. ५४ . ९६**

**वि. २२ . १४९**

ध्रुवे स्थिते स्थितम्, आसीने चासीनं स्थितं वा, शयने कौतुकमासीनं

स्थितं वा, ध्रुवे स्थितेऽप्यासीनं कौतुकमौत्सवं चेति केचित्। यानके यानकम्

अ. १३ ; य. १७ . ३

क्रि. ६ . १८, १९

यदाकारं ध्रुवाकारं तदाकारं च कौतुकम्।।

आसने स्थानकं वाथ शयने स्थानकासने।
एवं कौतुकमुद्दिष्टम् -------------।।

प्र. ९ . ३४

अ. ८

सर्वत्र कौतुकं विद्यात् स्थानकं वा सुखासनम्।।

कारयेदुक्तमार्गेण शयनानि विनात्र तु।

### ४.२५.२५ विष्णोः कौतुकबेरस्य स्वरूपम्

ज्ञा. ५५ . ९६, ९७

विष्णुः सुवर्णवर्णो रक्तास्यपाणिपादाक्षः शुकपिञ्छाम्बरधरः किरीट-केयूरहारप्रलम्बकटिसूत्रोज्वलितः शङ्खचक्रधरः श्रीवत्साङ्को रक्त (?) त्रयसमन्वितः सुवर्णरजतताम्रदारूणामन्यतमेन सलक्षणमेव कौतुकं कारयेत्। अलक्षणे तु तत्सर्वं भस्मसाद्भवति सकलत्वात् तस्य।

### ४.२५.२६ शान्तिककौतुकबेरस्य स्वरूपम्

ज्ञा. ४ . ६

अथातः शान्तिकं------------------ कौतुकं रत्नहाटककृतम्।

### ४.२५.२७ पौष्टिककौतुकबेरस्य स्वरूपम्

ज्ञा. १० . १६

अथातः पौष्टिकं व्याख्यास्यामः------- कौतुकं ताम्ररजतकृतम्।

### ४.२५.२८ आभिचारिककौतुकबेरस्य स्वरूपम्

**ज्ञा. १० . १७**

अथाभिचारिकम्-------- कौतुकं कृष्णायसारकूटवृत्तलोहसीसाद्यैः कृतमार्द्राऽऽश्लेषामूलकृष्णाष्टमीचतुर्दश्यादिदिनेषु शर्वर्यां स्थापितम्।

**अ. १३**

आयसैश्चारकूटैश्च त्रपुषा कांस्यमेव च ।।

न कुर्याद्देवतारूपं कुर्याच्चेदाभिचारिकम्।

### ४.२५.२९ कौतुकादिबेराणां उत्तमादिमानत्रैविध्यम्

**प्र. ७. ६२ - ६८**

जङ्गमानां भवेन्नाम (न्मानं?) मूलबेरवशात्तथा।
बिम्बोदयं चतुर्विंशद्भागानष्टांशकं तथा।।

वेदांशं तु भवेदुच्चं जङ्गमस्य प्रकीर्तितम्।
मानाङ्गुलेन सप्तादि द्विद्व्यङ्गुलविधानतः।।

पञ्चाशत्सवनाङ्गुल्या विधिस्सर्वो विधीयते।
मूलबेराङ्गुलान्मानमारभ्यैकादशाङ्गुलम्।।

द्विद्व्यङ्गुलविवृद्ध्या तु सषष्टिर्त्र्यङ्गुलं भवेत्।
प्रत्येकं तु त्रिभेदं स्यात् उत्तमाधममध्यतः।।

उत्कृष्टं नवतुङ्गं स्यात् मध्यमं नवतुङ्गकम्।
निकृष्टं तु तथा प्रोक्तं सप्तविंशतितुङ्गकम्।।

एतैरुत्तममानं स्यात् मध्यमं च तथैव हि।
कर्मार्चोत्सवस्नानाच्च योज्यं स्यादन्यथा न तु।।

अधमैस्तु भवेद्यत्र बलिबेरं विधीयते।

**स. २४ . ४४ - ५२**

अथवा कौतुकादीनि कारयेदेवमेव वै।।

मूलबिम्बस्य चायामं त्रिधा कृत्वैव तस्य च ।
एकभागं व्यपोह्यैव द्विभागं सम्प्रगृह्य च ।।

कारयित्वा प्रभां तत्र सुपीठे योजयेच्छुभाम्।
अथवा पार्श्वयोः शङ्कू योजयेत् तत्प्रभां तथा।।

पीठस्य पार्श्वयोर्बाह्ये यन्त्रस्य सुषिरं धृतम्।
तद्द्विभागं त्रिधा कृत्वा समस्तं चोत्तमं भवेत्।।

द्विभागं मध्यमं प्रोक्तमेकभागं तथाधमम्।
तथैकैकं त्रिधा कुर्यान्नवधेति च केचन।।

सामान्यप्रतिमां कुर्वन्नेवमेव विधानतः।
द्वादशाङ्गुलमानं वा बिम्बानामङ्गुलेन वा।।

अष्टादशाङ्गुलं वापि विंशत्यङ्गुलमेव वा।
अधमं मध्यमं श्रेष्ठं कैश्चित् सामान्यमुच्यते।।

षडङ्गुलविहीनं वै बिम्बं नैव च कारयेत्।
षडङ्गुलाधिकं बिम्बं सर्वलोकशुभप्रदम्।।

अथ सामान्यबिम्बं तद्यद्बिम्बं लौकिकं तथा।
द्वे बिम्बे कारयेदेवमिति केचिद्वदन्ति च ।।

**स. २४ . ११ - १४ ; स.२४. २६ - २९**

चक्रादीनयसा वापि कारयेदायुधान् बुधः।
ध्रुवबेरस्य मानं यत् त्रिभागं कारयेच्च तत्।।

तस्यैकभागमानं तु कौतुकं चोत्तमं भवेत्।
स्नपनं च तथा बिम्बमुत्सवं च तथैव च ।।

व्यक्तं सर्वाङ्गसम्पूर्णं सर्वाभरणसंयुतम्।
सौन्दर्येण समायुक्तं लक्षणेन समन्वितम्।।

शिल्पशास्त्रोक्तमार्गेण शिल्पिभिः कारयेद् बुधः।

------------------------------

------------------------------

विधिना कौतुकं बिम्बमौत्सवं स्नपनं तथा।
तानि त्रीण्यपि बिम्बानि कारयेत प्रयत्नतः।।

कौतुकेन च तुल्यं तदौत्सवं स्नपनं भवेत्।
ध्रुवबेरानुरूपं तु कौतुकं त्विति शासनम्।।

यथोचितानि बिम्बानि तथान्यानीति केचन।
न्यूनाधिकेषु चान्येषु दोषो नास्ति ततो द्विजाः।।

बिम्बमानाङ्गुलेनैव द्वादशाङ्गुलमानकम्।
सर्वेष्वपि च सर्वत्र सामान्यमिति चापरे।।

**वि. २२ . १४९, १५०**

ध्रुवबेरस्योत्सेधं त्रिधा कृत्वा एकांशमुत्तमम्, द्विभागं त्रिधा कृत्वा एकांशं मध्यमं, तद्द्विभागं त्रिधा कृत्वा एकांशमधमम्, ध्रुवबेरं दशाशं कृत्वा एकांशं तालं, तत्तालं द्वादशभागं कृत्वा एकांशमङ्गुलं, तदङ्गुले-नैकादशाऽङ्गुलं समारभ्य त्रियङ्गुलाधिकषष्ट्यङ्गुलान्तं द्व्यङ्गुलवृद्ध्या सप्तविंशतितुङ्गानि कौतुकादीनि, तद्विमाननिर्देशहस्ताङ्गुलेन सप्ताङ्गुलं समारभ्य त्रयोविंशत्यङ्गुलान्तं तद्द्व्यङ्गुलवृद्ध्या नवधा

भवति, एतेष्विष्टमानं विनिश्चित्य एकद्वित्रिचतुर्यवहीनाधिक्यं समन्तान्नयेत्। तन्न दोषाय भवति। तस्मात् कौतुकस्नपनोत्सवबलिबेराणि तत्तद्योग्येनैव कारयेत्[1] ।

**य. १७ . १३ - १७**

## ४.२५.३० कौतुकबेरमानस्य त्रैविध्यम्

**अ. १३**

मूलबेरत्रिभागैकमर्चाबेरं तु चोत्तमम्।
तन्मानस्याष्टभागे तु एकभागोनमध्यमम्।।
मध्यमे चाष्टभागे तु अधमं चैकहीनकम्।
-------------------------------
-------------------------------
-------------------------------
सौवर्णं चोत्तमं चार्चा पञ्चभागैकमाचरेत्।।
मध्यमं सप्तभागे तु नवभागैककन्यसम्।
रजतं च तथा कुर्यात् मूलबेरवशाद्भवेत्।।

## ४.२५.३१ कौतुकबेरस्य उत्तमोत्तमादिमानम्

**ज्ञा. ५७ . ९९**

ध्रुवायामं त्रिधा कृत्वा एकभागमुत्तमं, नवैकं हित्वा त्रिभागैकमुत्तमोत्तमं, भूतांशाद्वेदांशांशमुत्तमाधममाद्याद् द्व्यंशे द्विभागं मध्यमोत्तमं, तद्रसांशाद् भूतांशं मध्यममध्यमं, तद्गुणांशाद् द्व्यंशं प्रथमानलभागैकमधमादुत्तमं तत् त्रयंशादिद्वभागमधममध्यममेतद्गुणांशाद् द्व्यंशमधमाधममिति।

---

1 मानेन इत्यध्याहारः।

**स. २४ . १४ - १९**

ध्रुवबेरं नवांशं तत्कृत्वैकांशं व्यपोह्य च।।

शेषांशं तं द्विधा कुर्यादेकभागेन संमितम्।
उत्तमं मध्यमं चैव तत्कौतुकमुदाहृतम्।।

एवमेव यथान्यायमेकोनं तत् त्रिधा कृते।
तत्रैकभागेन मितं कौतुकं स्यात् क्रमेण वै।।

उत्तमादधमं चापि मध्यमादुत्तमं तथा।
मध्यमान्मध्यमं चापि मध्यमादधमं तथा।।

अधमादुत्तमं तद्वत् अधमं मध्यमं तथा।
ध्रुवबेरं नवांशं तत्कृत्वैकांशेन कौतुकम्।।

अधमाधममित्युक्तं यथाशक्त्या तु कारयेत्।

## ४.२५.३२ कौतुकादिबेराणां प्रमाणे ध्रुवबेरानुकूल्यम्

**वा. ४**

कौतुकं बलिबेरं च स्नापनं चौत्सवं पृथक्।
ध्रुवबेरानुकूलं चेत् सर्वसम्पत्समृद्धिदम्।।

विपरीतानुकूलं च नाचरेदिति शासनम्।

**स. २४. ६३ , ६४  क्रि. ३. २१**

## ४.२५.३३ रत्नजकौतुकबेरस्य निर्माणम्

**ज्ञा. ५६ . ९८**

विगतमला निर्व्रणाः स्निग्धा मनोरमाः सुप्रभाः मणयः। स्फुटितरूक्ष-वर्णविहीनलघुप्रभान् विवर्ज्य शुभाशुभं परीक्ष्य आलयाद्दक्षिणतः पीठं

कृत्वा देवं संस्थाप्यानुज्ञाप्य तस्योत्तरे त्रिवेदिसहितं पीठं कृत्वा दक्षिणे चिन्तामणिं मध्ये कौस्तुभम् उत्तरे स्यमन्तकम्। चिन्तामणिं दीप्तिरूपं श्रीकरं दिव्योद्भवमिति, कौस्तुभममृतोद्भवं महाभद्रं कोर्धशयनमिति, स्यमन्तकं सर्वदुःखविनाशनं सुखप्रदं रत्ननाथमिति रत्नत्रयमभ्यर्च्य अग्नावाघारान्ते शान्तिं रत्नत्रयं च घृतमिश्रचरुणा च हुत्वा आशीर्भिराघोष्य पुरुषसूक्तेनाङ्गोपाङ्गानि कल्पयेत्। लक्षणयुतादन्यद्रव्यकृताद् बेरादलक्षणमपि रत्नजं श्रेष्ठम्।

**४.२५.३४ कौतुकबेरस्य लक्षणसम्पत्तेः आवश्यकता**

**स. २५ . २०**

उक्तलक्षणसम्पन्नं कौतुकं स्थापयेद्यदि।
महाबेरे च ये दोषाः सर्वे नश्यन्ति तैन वै।।

**४.२५.३५ कौतुकबेरस्य मानवैशिष्ट्यावश्यकता**

**स. २५. २१, २२**

अज्ञानादर्थलोभाद्वा व्यामोहाद् यदि कौतुकम्।
न गुरुं न च दीर्घं च नातिह्रस्वं च कारयेत्।।

यत्नेन कौतुकं ग्राह्यं यथालाभेन मानतः।

**४.२५.३६ श्री-भूमिकौतुकयोरवस्थाननियमः**

**स. २४ . २१, २२**

स्थानके कौतुके देव्याः स्थानके कारयेत्तथा।।

आसीने चासने देव्यौ सहैव पृथगेव वा।

**४.२५.३७ देवीकौतुकादीनामुपादानद्रव्यम्**

**वि. २२ . १४९**

येन द्रव्येण देवो निर्मितस्तेन द्रव्येण देव्यौ प्रभां पीठं च कारयेत्। अन्यथा महत्तरो दोषो भवेत्।

स. २४ . २१ ; य. १७ . १२

**४.२५.३८ देवीकौतुकमानम्**

क्रि. ६. २९, ३०

देवस्य कर्णसीमान्तं बाह्वन्तं वा यथाविधि।।

हिक्कान्तं वाथ नाभ्यन्तं देवीमानमुदाहृतम्।

स. २४ . २०

**४.२५.३९ कौतुकोत्सवबेरयोः देवीनैयत्यम्**

क्रि. ६ . २५

सर्वत्र[1] देवीसंयुक्तौ कारयेत् कौतुकौत्सवौ।

वि. २२ . १४९

ध्रुवे देवीवियुक्तेऽपि कौतुकं देवीयुक्तं सर्वसमृद्धिदम्। कौतुके देवीवियुक्तेप्यौत्सवं देवीसहितमुत्तममित्यन्ये वदन्ति।

**४.२५.४० उत्सवबेरमानम्**

अ. ३३, ३४

उत्सवस्यापि तद्बिम्बमानमेवमुदाहृतम्।।

कर्मार्चायाः समं प्रोक्तं नवांशैकांशहीनकम्।

वा. ४

हस्तोन्नतं ध्रुवं बेरं तदर्धं चौत्सवं स्मृतम्।।

ध्रुवबेरसमं वाऽथ औत्सवं चेति केचन।

हस्तमानाधिकं कृत्वा ध्रुवे यत्र प्रतिष्ठिते।।

तस्यैव कौतुकादीनि कृत्वा तद्देशिकोत्तमः।

---

1. ध्रुवबेरस्य देवीसहितत्वे रहितत्वेपीत्यर्थः।

काश्यपाद्यादिना प्रोक्तं तत्क्रमेणैव कारयेत्।।

मधूच्छिष्टक्रियादीनां पूर्वमेव प्रचोदितम्।

**४.२५.४१ एकबेरप्रतिष्ठायाम् उत्सवबेरमानम्**

**क्रि. ६ . १७**

एकबेरं ध्रुवं चेत् स्यात् तत्समं चौत्सवं मतम्।

**४.२५.४२ उत्सवबेरस्य निषिद्धोपादानद्रव्यम्**

**य. १७. २**

शिलया दारुणा रत्नैरौत्सवार्चां न कारयेत्।।

**ज्ञा. ५६ . ९७ ; स. २४ .१९**

**४.२५.४३ उत्सवबलिबेरयोः निषिद्धोपादानद्रव्यम्**

**वि. २२. १४९**

शिलया दारुणा चोत्सवं बलिबेरं च न कारयेत्।

**४.२५.४४ उत्सवस्नपनबलिबेराणामवस्थानम्**

**य. १७ . ४**

उत्सवं स्नापनं पश्चाद् बलिबेरं विशेषतः।
सर्वत्र स्थानकं कुर्याद्देवीभ्यां च यथा तथा।।

**क्रि. ६. १९ , २४**

-------------- स्नापनं स्थानकं भवेत्।।

------------------------------

स्नापनं [1]सर्वमूर्तीनां स्थानकं स्याच्चतुर्भुजम्।

**४.२५.४५ कौतुकबेरस्यावस्थाने मतभेदः**

**ज्ञा. ५४. ९६**

सर्वत्रौत्सवमर्चा च स्थितमेवेत्यन्ये।

1.मत्स्यादिमूलबेरेषु यथाकथञ्चित् स्थितेष्वपि स्नपनमूर्तिः परं स्थानकाकारेणैव कुर्यादित्यर्थः।

**स. २४ . २५**

आसीने कौतुके वापि स्थितं वाप्यौत्सवं भवेत्।।

**४.२५.४६ श्री-भूदेव्योः कौतुकोत्सवबेरयोः अवस्थानक्रमः**

**क्रि. ६ . २४, २५**

देवे स्थिते स्थिते देव्यौ आसीने स्थानकासने।।

विपरीतं न कुर्वीत यदि कुर्यात् विनश्यति।

**य. १७ . ५**

**प्र. ९. ३५. ३६ ***

**४.२५.४७ स्नपनबेरस्य मानम्**

**अ. १३**

कौतुकस्याष्टभागे तु स्नपनं चोनभागकम्।।

**४.२५.४८ बलिबेरस्य मानम्**

**क्रि. ६. १७,१८**

ध्रुवबेरमुखोत्सेधं बलिबेरं प्रकल्पयेत्।।

कौतुकार्धं त्रिभागैकभागं वा बलिबेरकम्।

**अ. १३**

बल्यर्थं कल्पितं बेरं मानमेवमुदाहृतम्।
अर्चाबेरत्रिभागैकं बेरं चैवोत्तमं भवेत्।।

तद्रूपं[1] चाधमं विद्यात् यथा विभवविस्तरम्।

**प्र. १९ २४ - ३६**

बल्यर्थं क्लृप्तदेवस्य चोर्ध्वमानमुदाहृतम्।।

---

* यद्यप्यत्र 'देवे स्थिते न देव्यौ च आसीने स्थानकासने' इति श्लोकः पठ्यते। स पाठोऽशुद्ध इति भाति। क्रियाधिकारे दृश्यमानः समीचीनः पाठः।

1. अत्र ग्रन्थपातः इति भाति, मध्यमबलिबेरस्यानुक्तत्वात्।

महाबेरस्य हस्तेन चैकविंशतिकाङ्गुलम्।
सप्तदशाङ्गुलं विद्यात् द्वादशाङ्गुलमेव वा।।

श्रेष्ठमध्यकनिष्ठानि त्रिविधं मानमाचरेत्।
अर्चाबेरत्रिभागैकम् उत्तमप्रतिमा भवेत्।।

तन्मानस्य दशांशेन त्वेकोनं मध्यमं भवेत्।
मध्यमस्य दशांशेन त्वेकोनमधमं भवेत्।।

महतो मूलबेरस्य मुखायामं प्रशस्यते।
बल्यर्थं प्रतिमां कुर्यात् सर्वेषां स्थापनं भवेत्।।

सौवर्णं राजतं ताम्रं श्रेष्ठमध्यमगौणतः।
रत्नजप्रतिमां कुर्यात् मानोन्मानं न विद्यते ।।

उष्णीषं गोलकं ज्ञेयं शिरोमानं त्रिमात्रकम्।
केशान्तार्चा समं भागं सङ्गमात्पुटसूत्रकम्।।

पुटसूत्राद्धनुपर्यन्तमेकमेकं तु भागशः।

गलमर्धाङ्गुलं विद्यात् मात्रार्धं ग्रीवमुच्यते।।

हिक्का हृदयपर्यन्तं मुखं मात्राधिकं भवेत्।
हृदयं नाभि तथैवोक्तं तदधस्तात्तु तत्समम्।।

ऊरू च द्विमुखायामं गोलकोत्सेधमिष्यते।
चरणं जानुमानं च कालाय पुरतो परम्।।

हिक्कासूत्रादधस्तात्तु बाहुद्विमुखनेत्रकम्।
प्रकोष्ठं मुखबन्धं च मुखमर्धाधिकं भवेत्।।

मणिबन्धाङ्गुलस्याग्रे मुखायामं प्रशस्यते।
चतुर्भुजं च कृत्वा तु मानमेवमुदाहृतम्।।

---- व कुर्यात् पद्माकारं तु गोलकम्।

## ४.२५.४९ बलिकौतुकबेरयोः देवीराहित्यनियमः

**क्रि. ६ २६ - ३०**

[1]सदार्चां बलिबेरं च देवीरहितमाचरेत्।

------------------------------

बलिबेरार्चयोर्देव्यौ नैव कुर्याद्विचक्षणः।।

## ४.२५.५० कौतुकबेरस्य पीठमानम्

**अ. २२**

अर्चापीठं च कृत्वा तु ब्राह्मं च पदमध्यमे।
ब्रह्मभागं त्रिधा कृत्वा द्विभागं संव्यपोह्य च ।।
पश्चिमांशेऽर्चनापीठं भूतभागाग्रमन्तरे।
त्रिवेदिपीठमेवोक्तं भुवङ्गस्य समं भवेत्।।
अधिके व्याधिपीडा च हीने च मरणं ध्रुवम्।

**ज्ञा. ३६ . ६७**

अर्चायास्तु भुवङ्गसमं त्रिवेदिसहितं मण्डलं चतुरश्रं वा। अथ वा एकामेव वेदिकां कारयेत्।

**ज्ञा. ५७ . ९९**

प्रतिमात्रिभागैकं पीठं तत्त्र्यंशं पद्मं शेषं पूर्ववदाचरेत्।

---

1. ध्रुवबेरस्य देवीसहितत्वे रहितत्वे वेत्यर्थः।

इदमत्र चिन्त्यम्। अत्रैव पञ्चविंशे श्लोके -'सर्वत्र देवीसंयुक्तौ कारयेत् कौतुकौत्सवौ'। इति कौतुकबेरस्य देवीसाहित्यनियममुक्त्वा अनुपदमेव षड्विंशे त्रिंशे च श्लोके अर्चापरनामधेयस्य कौतुकबेरस्य देवीराहित्यनियम उच्यते कथमिति। अतो विहित- प्रतिषेधाद्विकल्पः फलति। अत एव विमानार्चनाकल्पे 'कौतुके देवीवियुक्तेऽपि औत्सवं देवीसहितमुत्तममित्यन्ये वदन्ति' इत्युक्तम्।

**४.२५.५१ कौतुकादिबेराणां पीठमानम्**

**वि. २२ . १५२, १५३**

कौतुकादीनां पीठं तत्तद्द्रव्येण बेरायामस्य त्रिचतुः पञ्चषट् सप्ताऽष्टनव भागैकभागं तस्योर्ध्वपद्मोच्चं, तृतीयभागैकभागं (भिन्नमभिन्नं) वा तस्यार्धांशोनमूर्ध्वदलोत्सेधं, तस्य विस्तारम्, अधः पद्मविस्तारात् पञ्चभागोनं, तत्पीठोत्तुङ्गाध्यर्धं, पादोनद्विगुणं, द्विगुणं वा, पीठविस्तारं, जगत्यां बाह्यतत्तद्दशोनम् ऊर्ध्वपट्टिकाया तदष्टांशोनम्, अधः पद्माग्रदलाग्रविस्तारम्। अथवा बेरोदयं षडंशं कृत्वा तद्द्विभागं पञ्चभागद्विभागं वा पीठविस्तारं कारयेत्।पीठोत्सेधं द्वादशभागं कृत्वा एकांशं पादुकं सार्धत्र्यंशा जगती द्व्यर्धांशं कुमुदम्, अर्धांशं कम्पं, द्व्यर्धांशं कण्ठम्, अर्धांशं कम्पं सार्धांशा महापट्टिका चैवं पीठं कारयेत्।

उपपीठोत्सेधं द्वादशभागं कृत्वा एकांशं पादुकं, द्व्यशं पद्मम्, एकांशं कम्पं, त्र्यंशं कण्ठम्,एकांशं कम्पं, द्व्यर्धांशां महापट्टिकां कृत्वा संयोजयेत्।

**य. १७ . २७ - ३२**

**४.२५.५२ आसनकौतुकबेरस्य पीठमानम्**

**वि. २२ . १५३**

आसनपीठोत्तुङ्गं बेरोत्तुङ्गं त्रिधा कृत्वा एकांशं, तदष्टांशाधिकं, तदष्टांशोनं वा विस्तारं, द्विगुणं दैर्घ्यं त्रिगुणं वा, अन्यत् सर्वं पूर्ववत्। एवमासनपीठं कल्पयेत्। पार्श्वयोरुभयोः शङ्कू सुषिरं वा कारयेत्।

**य. १७ . ३३ - ३४**

**४.२५.५३ कौतुकपीठप्रभयोः उपादानद्रव्यम्**

**स. २४ . ३९**

येन कौतुकमुद्दिष्टं तेन पीठं प्रभामपि।
अन्यथा चेन्महादोषस्तस्मात् तेनैव कारयेत्।।

**ज्ञा. ५७ . ९९**

### ४.२५.५४ कौतुकबेरपीठे योजनीयानि मुक्ताफलानि

**ज्ञा. ५६ . ९८**

मुक्ताफलेष्वष्टसु शङ्खजनागजाब्धिजान्यतीव पुण्यफलदानि। अवेध्यानि तानि जातरूपमयपीठप्रबद्धान्यर्चयेत्। तेष्वम्भोधिजं विष्णुरूपं परितः सहस्रयोजनस्थनॄणामवृद्ध्यरिष्टापमृत्युदारिद्र्यादीन् विनाशयति। तस्मात् सम्यक् पूजयेत्।

### ४.२५.५५ कौतुकप्रभायाः लक्षणम्

**ज्ञा. ५७ ९९ , १००**

ज्ञानदेहालङ्कारजाः प्रभाः प्रोक्ताः। देवदेवस्य विष्णोस्तु प्रभास्तिस्रः रुद्रस्य द्वे, धातुः श्रीभूम्यादीनामेका।इन्द्रादीनां मकुटाश्रया बिम्बकल्पितेन लोहेनैव पीठबन्धादीन् कल्पयेदन्यथा दोषाय भवति। प्रभाविस्तारं मुखार्धं तस्मिन् ज्ञानभाण्डे चियोः (?) यष्टिविस्तारं कोलकं देहजायाभागं यष्टीनामुपरि रश्मिज्वालास्त्रिनतानूर्ध्वाग्रान् दक्षिणे दक्षिणावर्तान् वामे वामावर्तानेवं कुर्यात्। इन्द्रचापवद्यष्टिश्च। अग्निशिखावद्रश्मिज्वाला। मकुटाच्चतुरङ्गुलमाहृत्य हस्तयोर्भागं संवृत्य पीठपार्श्वयोर्योजयेत्। एवं रश्मिज्वाला अतिनिबिडा नातिविरला भवेयुः। उभयोः पार्श्वयोः समग्राश्चैवं कृत्वा बहिर्मृत्तिकया आलिप्य कर्तुरनुकूलर्क्षे रात्रावेव शुभर्क्षे शुभहोरायां यथोचितं लोहमादायोद्दीप्य स्रावयेत्। तत्काले देवदेवमनुस्मृत्याघोष्य शक्तितो दक्षिणां दद्यात्।

**स. २४. ३६ - ३८ , ४० - ४४**

प्रभां त्रियष्टिकां कुर्याद्देवदेवस्य शार्ङ्गिणः।।

तद्यष्टीनां च विस्तारश्चैकैकं गोलकं भवेत्।
द्वादशाङ्गुलमानं तत्प्रभाविस्तारमिष्यते।।
देहलब्धाङ्गुलं चेति तदङ्गुलमुदाहृतम्।

-----------------------------

-----------------------------

उपर्युपरि यष्टीनां रश्मयस्त्रिंशतिः स्मृताः।
तच्छिखायामविस्तारं यथासौन्दर्यमेव च ।।

न श्लिष्टा नैव विरलाश्चोभयत्र समाः स्मृताः।
ऊर्ध्वाग्रानेव तान् कुर्यात् पार्श्वयोरुभयोरपि।।

दक्षिणे दक्षिणावर्तौ वामहस्तात्तु वामतः।
इन्द्रचापनिभा यष्टिश्शिखिवद्रश्मिमालिकाः।।

व्यपोह्य मकुटादूर्ध्वं चतुरङ्गुलमुन्नतम्।
भागं भागं व्यपोह्यैव पार्श्वयोश्चक्रशङ्खयोः।।

मधूच्छिष्टेन विधिना कारयेद्युक्तिहेतुभिः।

**वि. २२ . १५३, १५४**

प्रभामण्डलमेकं द्वित्रिचतुष्पञ्चयष्टिकं, प्रत्येकं, देहलब्धाङ्गुलेन चतुस्त्रिद्व्येकाङ्गुलविस्तारं, तत्प्रभाविस्तारं, चतुरष्टद्वादशषोडशाङ्गुलं, रश्मिमालासहितं कारयेत्। रश्मींस्त्रिनतान् सर्वत्र समां दक्षिणे दक्षिणावर्तान्, वामे वामावर्तांश्च युक्त्या तक्ष्णा तु कारयेत्। मौलिशिखामणेरूर्ध्वं चतुरङ्गुलं पार्श्वयोः शङ्खचक्रयोरन्तारं भागं हित्वा शङ्कोः सुषिरयोर्वा प्रभामण्डलं संयोजयेत्।

**नि. १७**

प्रभां त्रियष्टिकां कुर्यात् सविजार्भैकमेव वा?।।

विस्तारश्चैव यष्टीनाम् एकैकं ह्येव गोकुलम्(लकम् ?)।
देहलब्धाङ्गुलेनैव प्रभाच्छत्रादि कारयेत्।

द्वादशाङ्गुलमानेन प्रभाविस्तारमेव हि।।

देव्यादीनामथैष्यन्ते पर्या परि यष्टिना(?)।
ज्वालां च त्रिणताग्रायां यथासौन्दर्यकं तथा।
नैव विरलान्न शिलष्टा अन्याग्रानेव कारयेत्।।

अन्योन्यरन्ध्रानेतांश्चोभयं तत्र समा स्मृताः।
दक्षिणे पार्श्वके चैव दक्षिणावर्तकानपि।।

वामे च वामावर्तास्तु ज्वालादीप्ततरानपि।
किरीटोर्ध्वं व्यपोह्यैव वेदाङ्गुलसमुन्नतम्।।

व्यपोह्य भागं भागं वै पार्श्वयोश्चक्रशङ्खयोः।
यन्त्रेण सुषिरं योज्यं बाह्ये पीठस्य पार्श्वयोः।।

अवरं किञ्चिदाश्रित्य चान्योन्यप्रोतयन्त्रकान्।
शिखाग्ररश्मिमालांस्ताम् इन्द्रचापनिभां प्रभाम्।।

कारयेत् सावधानेन योजयेत् सुषिरे प्रभाम्।
शङ्कोश्च पार्श्वयोरेव योजयेदथवा प्रभाम्।।

यथाबिम्बे च तच्छत्रं तत्समं कारयेद्बुधः।
प्रभायामूर्ध्वयष्ट्यग्रे यन्त्रेणैव सुयोजयेत्।।

**४.२५.५६ श्री-भूम्यादिकौतुकानां प्रभास्वरूपम्**

**स. २४ . ३८**

एकयष्टिप्रभामेव श्रीभूम्यादिषु कारयेत्।।



## २६.मत्स्याद्यवताराणां कौतुकादिबेरकल्पने विशेषाः

### ४.२६.१ मत्स्याद्यवताराणां ध्रुवबेरालये कौतुकबेरस्वरूपम्

**प्र. १३. १०**

अवतारस्य सर्वस्य कौतुकं स्याच्चतुर्भुजम् ।।

**वा. १८**

**प्र. १६. ११८ ,११९**

मत्स्यकूर्मवराहाणां वामनस्य विशेषतः।।

कौतुकं विष्णुरूपं तु कुर्याच्चैव चतुर्भुजम्।

ध्रुवरूपं न कुर्वीत यथेष्टमितरत्र तु।।

**वि. २२. १४९**

प्रादुर्भावानां कौतुकं तत्तद्रूपं, विष्णुं चतुर्भुजं वा, मत्स्यकूर्मवराहवामनानां तत्तद्रूपं नैव कुर्यात्।

**ज्ञा. ५४. ९६**

**स. २४.३०**

वाराहं नारसिंहं च रामं कृष्णं तथैव च।

कारयेत् कौतुकं तद्वच्चतुर्भुजमथापि वा।।

### ४.२६.२ मत्स्यध्रुवबेरालये कौतुकबेरस्वरूपम्

**वि. ५५. ३६४**

[1]कौतुकं विष्णुं चतुर्भुजमेव कारयेत्। तद्रूपं न कारयेत्।

---

1. मत्स्यस्येत्यनुवृत्तिः।

**४.२६.३ कूर्मध्रुवबेरालये कौतुकबेरस्वरूपम्**

**वि. ५५. ३६५**

कूर्मस्य कौतुकं विष्णुं चतुर्भुजमेव कुर्यात्। तद्रूपं नैव कारयेत्।

**प्र.१३. १६**

**४.२६.४ मत्स्यकूर्मयोः ध्रुवबेरालये कौतुकादिबेरस्वरूपम्**

**क्रि. ६.२०**

कौतुकं विष्णुमूर्तिः स्यात् ध्रुवयोः मस्त्यकूर्मयोः।
अन्येषामवताराणां तद्वद्वा विष्णुमेव वा।।

**य. १७.६**

**स.५८. १५ , १६**

नवभेदेष्वथैकेन कौतुकं कारयेद् बुधः।
मत्स्यं च कूर्मरूपं च कौतुकं न समाचरेत्।।

औत्सवं स्पापनं चैव बिम्बं कुर्याच्चतुर्भुजम्।

**ज्ञा. ७९. १५२**

**४.२६.५ वराहध्रुवबेरालये कौतुकबेरस्वरूपम्**

**वि. ५६. ३६८**

त्रयाणां वराहाणां तद्रूपं कौतुकं च बिम्बं चतुर्भुजं वा कारयेत्।

**स. ५८. ४९**

**४.२६.६ वराहध्रुवबेरस्य कौतुकबेरपूजायां श्रियः पूजनक्रमः**

**अ. १३**

वराहध्रुवबेरस्य[1] श्रियं वक्षःस्थलाद्धरेः।।
आवाह्य पूजयेन्नित्यं विष्णुमूर्तिप्रकल्पने।

---

1.अत्र, कर्मार्चा इत्यनुवर्तनीयम्

**४.२६.७ नरसिंहध्रुवबेरालये कौतकुबेरस्वरूपम्**

**वा. २०**

अत्रैव कौतुकं कुर्यात् चतुर्भुजमथापि वा।

**अ. १३**

**४.२६.८ त्रिविक्रमादिध्रुवबेरालये कौतुकबेरस्वरूपम्**

**स. २४. ३२, ३३**

ध्रुवे त्रिविक्रमे वापि वामने च तथैव च।।

बिम्बं चतुर्भुजं चैव कौतुकं स्थितमेव वा।

**ज्ञा. ८२. १५७, १५८ ; वा. २०**

**४.२६.९ परशुरामध्रुवबेरालये कौतुकबेरस्वरूपम्**

**वि. ५८. ३७६**

कौतुकं तद्रूपं चतुर्भुजं विष्णुं वा कारयेत्।

**वा. २१ ; प्र. १५ . ७ क्रि. ११. ८४**

**४.२६.१० श्रीरामध्रुवबेरालये कौतुकबेरस्वरूपम्**

**स. ६०. २६**

स्थितं च कौतुकं कुर्यादासीनं वापि कारयेत्।

सायुधे सायुधं तद्वत् कौतुकं च समाचरेत्।।

**क्रि. ११. ९५, ९६ ; अ. १३**

**४.२६.११ श्रीरामकौतुकबेरस्य उपादानद्रव्यम्**

**खि. १९.९८, ९९**

कौतुकं कारयेद्विद्वान् सौवर्णं राजतं तु वा ।।

ताम्रजं दारवं वापि षण्मानपरिकर्मितम्।

**४.२६.१२ श्रीरामध्रुवबेरालये कौतुकबेरस्वरूपम्**

**अ. १३**

राघवं ध्रुवबेरस्य कौतुकादौ चतुर्भुजम्।।

कुर्याच्चेत् श्रद्धया धीमान् श्रीभूमिसहितं चरेत्।
तद्रूपं कौतुकं विद्यात् सर्वत्रापि चतुर्भुजम्।।

मध्यमं वै ध्रुवं रूपं सर्वत्र प्रभुरिच्छया।
आवाहने प्रतिष्ठायां पूजायामवतारतः।।

राघवस्य ध्रुवस्योक्तं चतुर्भुजवरं तथा।
आवाहयेत्तु देवी द्वे सीतायाश्चैव बुद्धिमान्।।

मूलप्रकृतिरूपा साऽभेदा तस्मान्महीमपि।
न दोषश्चात्र, सौमित्रं पीठपार्श्वे ततः प्रभुः।।

आवाह्य कौतुकस्याथ ध्रुव (वं?) रामानुजं तथा।

**स. ६०. २६**

स्थितं च कौतुकं कुर्यादासीनं वाऽपि कारयेत्।
सायुधे सायुधं तद्वत् कौतुकं च समाचरेत्।।

**क्रि. ११. ९५, ९६ ; वा. २१.**

**४.२६.१३ बलरामध्रुवबेरालये कौतुकबेरस्य देवीसमन्वितत्वम्**

**स. ६०. ५७**

सर्वाभरणसंयुक्तं देवं देवीसमन्वितम्।
एवं तु कौतुकं कृत्वा स्थापनं सम्यगाचरेत्।।

**क्रि. ११. १०५ ; वा. २२.**

**वि. ५८. ३८०**

[1]तद्रूपं कौतुकं विष्णुं चतुर्भुजं वा कारयेत्।

1. बलरामरूपम्।

### ४.२६.१४ कृष्णध्रुवबेरालये कौतुकबेरस्वरूपम्

**प्र. १६. ९५, ९६**

एवं रूपं च कृत्वा तु तद्रूपं कौतुकं चरेत्।
अथवा कौतुकं बिम्बं चतुर्भुजसमन्वितम्।।

अभयं वरदं पूर्वं शङ्खचक्रधरं परम्।
एवं चतुर्भुजं कृत्वा स्थापनारम्भमाचरेत्।।

**स. ६०. ८०, ८१ ; वि. ५९. ३८१**

**स. ६०. ६८ ; क्रि. ११. ११३**

**अ. १३**

रामकृष्णार्चनं[1] बिम्बं स्थानकं तु चतुर्भुजम्।

### ४.२६.१५ कृष्णध्रुवबेरालये कौतुकबेरस्य उपादानद्रव्यम्

**खि. १९. १८१**

सौवर्णं राजतं वापि ताम्रजं वापि कारयेत्।

### ४.२६.१६ कृष्णध्रुवबेरालये कौतुकबेरमानम्

**खि. १९. १७७ - १८२**

नवधा क्रममालक्ष्य इदं स्यादधमोत्तमम्।
पूर्वोक्तेनैव मार्गेण अष्टदिक्षु तथाऽर्चयेत्।।

मूलबिम्बस्य चायामं त्रिधा कृत्वा विचक्षणः।
एकभागं व्यपोह्यैव द्विभागं सम्प्रगृह्य च।।

तद्विभागं त्रिधाकृत्य समस्तञ्चोत्तमं भवेत्।
द्विभागं मध्यमं प्रोक्तमेकभागं तथाऽधमम्।।

एकैकं त्रिविधं कृत्वा नवधा भेद उच्यते।
कर्मार्चाबिम्बमुद्दिष्टं यथाशक्ति विधानतः।।

1. अत्र कर्मार्चा इत्यनुवर्तते।

-----------------------------

ध्रुवकौतुकयोस्सर्वसारूप्यञ्चोत्तमं भवेत्।।
पीठं कृत्वा विधानेन रत्नन्यासादिकं चरेत्।

**४.२६.१७ रामकृष्णयोः कौतुकदिबेराणां मानत्रैविध्यम्**

**क्रि. ६. १४ - १६**

जङ्गमानां तदेकांशमुत्सेधं[1] परिकीर्तितम्।।
ध्रुवबेराग्निभागे तु द्विभागं परिगृह्य च।
तद्द्विभागं त्रिधा कृत्वा समस्तं चोत्तमं भवेत्।।

द्विभागं मध्यमं प्रोक्तम् एकभागं तथाऽधमम्।
कर्मार्चार्चोत्सवानां च मानं वै रामकृष्णयोः।।

**४.२६.१८ मानुषवासुदेवध्रुवबेरालये कौतुकबेरस्वरूपम्**

**वि. ६०. ३८५**

[2]तद्रूपं कौतुकं कारयेत्। अथवा विष्णुं चतुर्भुजम् एवं संस्थापयेत्।

**४.२६.१९ दैविकवासुदेवध्रुवबेरालये कौतुकबेरस्वरूपम्**

**वि. ६०. ३८५**

एतेषां[3] कौतुकबिम्बानि पूर्ववत्[4] कारयेत्।

**४.२६.२० कल्किध्रुवबेरालये कौतुकबेरस्वरूपम्**

**वि.५९. ३८२**

तद्रूपं कौतुकं विष्णुरूपं चतुर्भुजं वा, कारयेत्।

**प्र.१६. १०७**

---

1 ध्रुवबेरैकांशमित्यर्थः। 2. मानुषवासुदेवरूपम्।
3. दैविकवासुदेवादीनाम्। 4. मानुषवासुदेवादीनामिव।

## ४.२६.२१ मत्स्याद्यवतारध्रुवबेरालये औत्सवबेरस्वरूपम्

**य. १७. ७, ८**

औत्सवं त्ववतारेषु स्थितं कुर्याच्चतुर्भुजम्।

कारयेद्रामकृष्णौ वा तत्तद्रूपं ध्रुवस्य यत्।।

विष्णुं वाऽप्यवतारेषु कारयेदौत्सवं बुधः।

**स. २४. ३१, ३२**

मत्स्यं कूर्मं वराहं च नारसिंहं च वामनम्।

त्रिविक्रमं तथा बिम्बमौत्सवं नैव कारयेत्।।

विष्णुं चतुर्भुजं बिम्बमौत्सवं तत्र कारयेत्।

**क्रि. ६. २१**

[जमदग्निसुतस्य कल्किनश्च उत्सवबिम्बं विष्णुमेव कुर्यादित्यधिकम् इति विशेषः। ]

## ४.२६.२२ रामरूपस्योत्सवबेरस्य स्वरूपम्

**क्रि. ६. २२**

ध्रुवे निरायुधे रामे कुर्यात्सायुधमौत्सवम्।

## ४.२६.२३ कृष्णरूपस्योत्सवबेरस्य स्वरूपम्

**क्रि. ६. २२, २३**

ध्रुवबेरे तथा कृष्णे सायुधे च निरायुधे।।

कृष्णरूपेष्वसङ्ख्येषु क्रीडायष्टिधरं परम्।

पार्थसारथिरूपं वा कुर्यादौत्सवमत्र तु ।।

**४.२६.२४ श्रीरामध्रुवबेरालये औत्सवबिम्बमानम्**

**प्र. १५. २१**

उत्सवप्रतिमायास्तु सर्वेषामालयेषु वै।
तद्देवभेदं मूर्तीनां तत्प्रमाणेन योजयेत्।।

**४.२६.२५ कल्किध्रुवबेरालये उत्सवादिबेरस्वरूपम्**

**प्र.१६.११०**

उत्सवस्नपनादीनि विष्णोरिव समाचरेत्।



## २७. परिषद्देवबेरकल्पनम्

### ४.२७.१ पारिषद्यायाः श्रीदेव्याः बेरस्वरूपम्

**क्रि. ५ . ९६ - ९८ , १०१**

तप्तहाटकसङ्काशां पद्मपत्रायतेक्षणाम्।
तिसृभिः पुष्पचूडाभिः ललाटोपरिशोभिताम्।।

सपद्मवामहस्तां तां कक्ष्याबद्धघनस्तनीम्।
प्रसारितेतरकरां सर्वाभरणभूषिताम्।।

श्रीवत्सादिमबीजां तां फाल्गुने चोत्तरोद्भवाम्।
श्रियं दक्षिणपार्श्वे[1] तु हंसनिर्याख्यवाहिनीम्।।

-----------------------------------

श्रीभूम्योः केचिदिच्छन्ति व्यत्ययेन करद्वयम्।

**स. २१ . १३**

[ अत्र तप्तहाटकसङ्काशामित्यस्य स्थाने प्रवालाभामिति। ]

**ज्ञा. ४९ . ८५**

**वि. २० . १०८**

[ अत्र क्षौमाम्बरधरा इत्यधिकम्। ]

### ४.२७.२ पारिषद्यायाः महीदेव्याः बेरस्वरूपम्

**क्रि. ५ . ९९ - १०१**

वामपार्श्वे[2] महीं श्यामां सर्वाभरणभूषिताम्।

1 देवस्य दक्षिणपार्श्वे। 2 देवस्य वामपार्श्वे।

वैशाखे रेवतीजातां दधतीं दक्षिऽणेम्बुजम्।।
प्रसारितेतरकरां प्रसन्नेन्दुनिभाननाम्।
महाचातकवाहां तां लक्ष्मीपूर्वाक्षरान्विताम्।।

श्रीभूम्योः केचिदिच्छन्ति व्यत्ययेन करद्वयम्।

**स. २१ . १३ ; ज्ञा. ४९ . ८५**

**वि. २० . १०८**

[ अत्र रक्ताम्बरधरा, रक्तोत्पलधरा, शङ्खरवा इति च अधिकम्। ]

### ४.२७.३ देव्यादिपरिषद्देवबेराणामुपादानद्रव्यम्

**य. १२ . २४**

यद्द्रव्यं देवतारूपं देव्यादिपरिषद्गणान्।
कारयेत्तेन द्रव्येण तत्तत्तालक्रमेण वै।।

**वि. १५ . ७३**

### ४.२७.४ श्री-महीदेवीबेरयोः स्थापनस्थानम्

**खि. १८ . २२६ - २३०**

अतः परं प्रवक्ष्यामि देव्योर्वै स्थापनाविधिम्।
द्विविधो मार्ग उद्दिष्टस्सहैव पृथगेव च।।

स्थानके तु ध्रुवे तत्र देवीयुक्तन्तु कौतुकम्।
स्थितमेवाचरेत्तद्वदासीनञ्चासने चरेत्।।

देव्यौ संस्थापयेत्तत्र सह वा पृथगेव वा।
सहासने यथा देव्यौ किञ्चिद्देवं समीक्ष्य वै।।

स्थाप्येऽन्तरं देवदेव्योः भागं तालं यवद्वयम्।

पृथगासने तु ते स्यातां देवं सम्यक् समीक्ष्य वै।।
स्थानके तु ध्रुवे येन देव्यौ मार्गेण संस्थिते।
तेन मार्गेण वै कुर्याद्देव्यौ कौतुक एव च ।।

## ४.२७.५ श्री-महीदेवीबेरयोः स्वरूपम्

**वि. २३ . १६९**

त्रिनतं द्विभुजं समभागं नतमानं चतुरङ्गुलं श्रीदेव्या दक्षिणपादं स्थितं वामपादं कुञ्चितं दक्षिणहस्तं प्रसारितं तदूरुमूलालम्बितं वामं पद्मधरं हेमाभाम्।

महीदेव्या वामपादं स्थितं दक्षिणपादं कुञ्चितं दक्षिणहस्तमुत्पलधरं वामं प्रसारितं तदूरुमूलालम्बितं श्यामाभां किरीटाद्याभरणान्विताम्।

**य. २१ . २ - ६ ; वा. ४**

## ४.२७.६ श्री-महीबेरयोः उच्छ्रायः

**य. १२ . १८ , १९**

वक्ष्यामि देव्योर्मानं तत्कर्णान्तं[1] नासिकान्तकम्।
हन्वन्तं बाहुसीमान्तं नाभ्यन्तं वाथ कारयेत्।।

-----------------------------

तथा चोद्देशमानं स्यादर्धं वा कारयेत्तयोः।।

**वा. ४**

**प्र. ८ . ३**

[ अत्र कर्णान्तमित्यस्य स्थाने कण्ठान्तमिति। ]

1 देवदेवस्य ध्रुवबेरं तच्छब्दार्थः।

**वि. १५ . ७२**

[ अत्र स्तनान्तमित्यधिकम्। ]

**४.२७.७ श्री-महीबेरयोः अवयवानां मानम्**

**वि. २३ . १६९ - १७१**

अथ देव्योः मानम्। मध्यमं दशतालं सविंशतिशताङ्गुलं --------- -------------------------- मूर्ध्नि केशान्तं भागं तस्मान्नेत्रं षड्यवं भागं, नेत्रात्पुटान्तं चतुरङ्गुलं, पुटाद्धन्वन्तं षड्यवं, त्रिमात्रं हनोः कण्ठं, द्विकलं कण्ठाद्धृदयान्तं, हृदयान्नाभ्यन्तं नाभेर्योनिमूलान्तं, त्रयोदशाङ्गुलं, तस्मादूर्वायतं षड्विंशत्यङ्गुलं, जानुद्विकोलकं, जंघाचोरुसमा, पादं भागं तालायामं, चतुर्भागमङ्गुष्ठायतं, चतुरङ्गुलं तर्जनीतत्समा, शेषाङ्गुल्यः क्रमादर्धाङ्गुलेनायताः।

अङ्गुष्ठादिविशालं षोडशाष्ट सप्त (सार्धसप्त) षड्यवं, नखायामं, स्वतारार्धं पादाग्रतलविस्तारं, षडङ्गुलं प्रपदस्य विस्तारम्, उन्नतं पञ्चाङ्गुलं पार्ष्णिद्विकोलकमक्षिगुल्फान्तरं पञ्चाङ्गुलं, नलकाविपुलं भागं जङ्घामध्यं त्रिकोलकं, सप्ताङ्गुलं जानुविस्तारम्, ऊरुमूलं द्वादशाङ्गुलं, गजहस्तसमवृत्तमूरुमूलं नलकाङ्घ्रिकटीतारं द्विमुखं पीठं सप्ताङ्गुलविस्तारं चतुरङ्गुलायतमूरू, अश्वत्थदलबाह्यवद्विपुलं मांसलं गुह्यं श्रोणीतारं तारा (कला) द्वशश्रोणीनेत्रायामविस्तारं सप्ताङ्गुलं नाभ्यधः।

नाभिष्षड्यवविस्तारं गम्भीरोदरकुक्षिमध्यं चक्रा (रुद्रां) ङ्गुलीविशालं (स्तनादधो) हृदयं त्रयोदशाङ्गुलतारं स्तनतारं नवाङ्गुलं चूचुकं त्र्यङ्गुलविस्तारं स्तनाच्च चतुरर्धाङ्गुलं (अर्धाङ्गुलं) स्तनमध्यं कक्षयोरन्तरमष्टादशाङ्गुलम्। छन्दोङ्गुलं बाहुदीर्घं कोर्परं द्व्यङ्गुलायतं

प्रकोष्ठकं तारं धृक् कलाङ्गुलं तलं सप्ताङ्गुलायामं मध्यमाङ्गुलं त्रिकलं पञ्चाङ्गुलीनामेका तर्जनी अनामिकासमा अङ्गुष्ठकनिष्ठकेतरा (द्विकला) यते नवसप्ताष्टसप्तर्त्तुयवविस्तारं क्रमादङ्गुष्ठद्यङ्गुलीनां षडंशैकांशं चतुरंशैकांशं स्वाग्राङ्गुलतारं नखदीर्घं यवाधिकषडग्निवेद्भूत-ऋतुसप्ताङ्गुलविस्तारं क्रमान्मणिबन्धतलप्रकोष्ठमध्यकोर्परदोर्मध्यभुजमूलं च कर्णविस्तारं सप्ताङ्गुलं मुखं द्वादशाङ्गुलं कुक्कुटाण्डसमाकारं केशान्तात् भ्रूद्विमात्रार्धं ततोक्षिद्वियवं त्र्यङ्गुलं, पुटादास्यं यवाङ्गुलं तदर्धाङ्गुलायतमधरं यवाङ्गुलं शेषं हनुः। कर्णाद्धनुस्त्रिमात्रार्धतुङ्गं शेषं पूर्ववत्। कटकाङ्गुलस्य चोत्तुङ्गं स्तनाक्षिसमं तन्मणिबन्धान्नाभेरन्तरं सार्धत्रयोदशाङ्गुलं तत्पार्श्वे मध्यं बाह्वन्तरं सप्ताङ्गुलं तथा प्रसारितहस्तस्य पार्श्वबाह्वन्तरं रसाङ्गुलं मणिबन्धादूरुमूलान्तरं वेदाङ्गुलं तदर्धं कराग्राद्रुमध्यान्तरं नीत्वा मूर्ध्नि पार्श्वे वामनेत्रसिते वामपुटेऽधरे हनौ सव्यस्तने सव्यपार्श्वे नाभेर्मध्ये वामोरुदक्षिणे वामाङ्घ्रिपार्ष्णिपार्श्वे च सूत्रं प्रलम्बयेत्। एवं श्रीदेव्याः। महीदेव्याः तद्विपरीतमार्गेण सूत्रं प्रलम्बयेत् । अङ्गुष्ठान्तरं सार्धत्रयोदशाङ्गुलं त्रिभागैकभागं पार्ष्ण्यन्तरं शेषं युक्त्या कारयेत्।।

**य. २१ . १ - २, ६ - ३०, ३३**

### ४.२७.८ पारिषद्यस्य मार्कण्डेयस्य बेरस्वरूपम्

**वि. २० . १११**

सुवर्णाभो ब्रह्मचारी रक्ताम्बरधरः पद्मवाहनः कूर्चध्वजः शङ्खरवः मकारबीजः मार्कण्डेयः।

**स. २१ . १६**

[ अत्र प्रवालाभ इति निर्दिश्यते। ]

**क्रि. ५ . १०१ ,१०२**

एकजानुक्रमासीनो भित्तिमूले तु दक्षिणे।
सोपवीतो जटामौलिः रोहिणीशो (जो ?) थ फाल्गुने।।

तप्तहाटकसङ्काशो मार्कण्डेयस्तु पूजकः।

### ४.२७.९ पारिषद्यस्य मार्कण्डेयस्य स्थापनस्थानम्

**य. १० . १५**

कुड्यकौतुकयोर्मध्ये मार्कण्डेयं भृगुं तथा।

**स. १४ . १८ ; य. १२ . २१**

### ४.२७.१० पारिषद्यस्य भृगोः बेरस्वरूपम्

**वि. २० . १११**

अग्निवर्णः शुक्लाम्बरधरः पद्मवाहनः कमण्डलुध्वजो रोहिणीजः शङ्खरवो नामाद्यक्षरबीजः ख्यातीशः पद्मापिता 'पद्मापितरं धातृनाथं ख्यातीशं भृगु' मिति (अर्चयेत्)

**क्रि. ५ . १०३, १०४**

वामपार्श्वे भृगुः कार्यो जातिहिङ्गुलिकप्रभः।
वैशाखे रोहिणीजातः ख्यातीशः पुष्पपाणिकः।।

अत्रानुक्तं तु तत्सर्वं पुराणस्योक्तवत् भवेत्।

**स. २१ . १६**

[ अत्र रत्नाभ इति विशेषः। ]

**ज्ञा. ४९ . ८५**

[ अत्र प्रवालाभ इति विशेषः। ]

### ४.२७.११ पारिषद्यस्य मुनेः बेरस्थापनस्थानम्

**य. १२ . २२, २३**

कुड्यकौतुकयोर्मध्ये षड्भागं तं विभज्य च।
कुड्यादेकांशकं नीत्वा द्वितीये दक्षिणोत्तरे।।

स्थापयेच्च मुनिं तत्र सकलं चेत्तिर्यग्गतम्।
तद् ब्रह्मसूत्राद्विधिवत्पश्चिमे तत्र वा बुधः।।

### ४.२७.१२ पारिषद्यस्य ब्रह्मणः बेरस्वरूपम्

**क्रि. ५ . १०४ - १०६**

पद्मासने समासीनो रुक्मवर्णश्चतुर्मुखः।।

कलशाक्षमालापाणिः जटामौलिश्चतुर्भुजः।
हंसोऽस्य वाहनं प्रोक्तं सावित्रीपतिरुच्यते।।
चैत्रेऽभिजिति सञ्जात अम्बरीषश्शौषिकस्य तु(?)।।

कमण्डलुध्वजश्चापि ब्रह्माख्यो दक्षिणे ध्रुवात्।

**स. २१ . १४**

[ अत्र दक्षिणे भित्तौ प्रवालाभम् इत्यधिकम्। ]

**ज्ञा. ४९ . ८६**

**वि. २० . १११**

[ अत्र दक्षिणे भित्तिपार्श्वे, उकारबीजः वेदरव इति च अधिकम्। ]

### ४.२७.१३ पारिषद्यस्य हरस्य बेरस्वरूपम्

**खि. १५ . १ - ५**

अतः परं पारिषद्यलक्षणं सम्प्रवक्ष्यते।

इन्द्रादीनां तथान्येषां परिषद्वर्गगामिनाम्।।

------------------------------।

नवार्धतालमानेन कुर्यात् बिम्बं यथाक्रमम्।।

हरः सस्यनिभः प्रोक्तः सुवर्णाम्बरसंयुतः।
तेन भावेन कर्तव्यं वपुर्विष्णोरिव स्मृतम्।।

दशतालपरीणाहं नवतालादनन्तरम्।
तन्मध्यमं तदा ग्राह्यं दिव्यं संहननं समम्।।

अच्युतस्येवाभरणं ब्रह्मसूत्रं विना तथा।
श्रीवत्सं दिव्यचिह्नं च विना रूपं समाचरेत्।।

**स. २१ . १४**
[ अत्र श्वेताभम् इति विशेषः। ]

**क्रि.५ . १०७ - १०९**
उत्तरे ध्रुवबेरस्य प्रवालाग्निनिभो भवेत्।
टङ्कैणधृत् चतुर्बाहुर्व्याघ्रचर्माम्बरो हरः।।

सोऽर्धचन्द्रजटामौलिः पिङ्गनेत्रैस्त्रिभिर्युतः।
आर्द्राजो मार्गशीर्षे तु शिवश्चण्डीशशैषिकः।।

दक्षिणाभिमुखश्चैव वृषभध्वजवाहनः।
पार्वतीशः शूलपाणिः पूज्यश्चात्र पिनाकवान्।।

**ज्ञा. ४९ . ८५**
**वि. २० . १११**
[ अत्र श्वेताभः डमरुध्वनिः, मकारबीजः, गङ्गाधरः, अष्टमूर्तिः इति च अधिकम्। ]

**४.२७.१४ ब्रह्मादिपार्षदानामाकारः**

**य. १५ . ३८, ४१**

ब्रह्मादिपार्षदान्त्सर्वान् गर्भगेहनिवासिनः।।

आभासं कारयेत्कुड्ये चित्रार्धं वेति केचन।

-------------------------------।।

-------------------------------।

स्थानसङ्कटनाशार्थं बलार्थं वा विशेषतः।।

विध्युक्तं तदशक्यात्वादाभासञ्चैव कारयेत्।

**४.२७.१५ पारिषद्ययोः ब्रह्मेशयोः गर्भगृहे स्थापनस्थानम्**

**स. २१ . १५**

चित्राभासौ च कर्त्तव्यौ ब्रह्मेशौ तौ चतुर्भुजौ।
कुड्यकौतुकयोर्मध्ये दक्षिणोत्तरयोः क्रमात्।।

**य. १० . १४**

वक्ष्यामि परिवाराणां गर्भगेहादिकं क्रमात्।
दक्षिणे भित्तिपार्श्वे तु ब्रह्माणं चोत्तरे हरम्।।

**४.२७.१६ गर्भगृहे ध्रुवबेरनिकटस्थानां ब्रह्मदिबेराणां मानम्**

**वि.१९. १०२**

ब्रह्माणं त्रितालेन, गरुडं पञ्चायुधान् षण्मात्राधिकद्वितालेन, द्विभुजं करण्टिकामकुटादिभूषणयुतं धृतवेगेन उद्देश्यकरवामं दक्षिणकरतलप्रहरणं गरुडं, सुवर्णाभं चक्रं पुंरूपं रक्ताभं शङ्खं पुण्डरीकरूपं (भूताकारं) वृत्ताकारं श्वेताभं, शार्ङ्गं नपुंसकं पीताभं, गदां रक्ताभां स्त्रीरूपां, खड्गं श्वेताभं पुंरूपं, तत्तन्मूर्धसु तत्तच्छिह्नानि च , द्विषट्तालेन च मधुकैटभौ चन्द्रादित्यौ अतिश्वेतातिरक्तौ त्रितालेन सनकसनत्कुमारौ बालरूपौ बकुलफलाभौ द्वितालेन तुम्बुरुनारदौ, त्रितालेन पीतरक्ताभौ, किन्नरमिथुनौ पीताभौ द्व्यर्धतालेन, षट्तालेन निघ्नं रक्ताभं, तथा श्यामां दुर्गाम्,

ऋषीन् त्र्यर्धतालेन तथाऽप्सरसश्च त्रयस्त्रिंशद्देवान्, इन्द्रादिलोकपालान्, चतुस्तालेन कारयेत्। देवस्य बाहुमानं स्तनान्तं वा देव्योर्मानं, पूजकयोर्ब्रह्मेशयोश्च देवस्यांऽशोनमेवं कारयेत्। अत्रानुक्तं सर्वं शिल्पशास्त्रोक्तविधिना कारयेत्।

## ४.२७.१७ गर्भगृहस्थानां श्र्यादीनां लक्षणम्

**ज्ञा. ४९ . ८५ , ८६**

तप्तहाटकसङ्काशां श्रियं , महीं श्यामलाङ्गीं, भृगुं प्रवालाभं, पुराणं सुवर्णाभं, चक्रं रविमण्डलाभं, शङ्खं चन्द्राभं...(?) कनकाभं किष्किन्धं, श्यामलाङ्गं सुन्दरं , रक्तं भानुं, शुक्लं चन्द्रं, सुवर्णवर्णं ब्रह्माणं, रुद्रं प्रवालाभं योजयेत्। मणिकं जटाधरं द्विभुजं हृदयेऽञ्जलिसंयुतं शुकपिञ्छाम्बरधरं पिङ्गलाक्षम् उपवीतोत्तरीयाजिनधरं, सन्ध्यां तत्पत्नीं सर्वालङ्कारसंयुक्तां सुवर्णाभां सुमुखीं मनोज्ञां हृदयेऽञ्जलिपुटां शुक्लवस्त्रां, तापसं जटिलं दण्डहस्तं शुक्लाम्बरधरं भिन्नाञ्जनाभं वैखानसं, दूर्वाभं दण्डिनं कपर्दिनं रक्ताम्बरधरं वीरवेषयुतं गरुडं काञ्चनाभम्।

आपादादाजान्वानाभेराकण्ठादामूर्धं पृथिव्यप्तेजोवायुमयं कालाञ्जननिभं गारुडं रूपमित्यृषयो वदन्ति।तद्वद्वापिं बृहत्पक्षाटोपं भुजस्थभुजगेन्द्रं वीररौद्रसमन्वितं दंष्ट्राकरालं श्यामोत्तुङ्गमहातुण्डं ललाटात्ताम्रचूडं हृदयेऽञ्जलिपुटं कटिविन्यस्तहस्तं पताकादक्षिणपाणिं वा श्यामाम्बरधरं वा पन्नगविभूषितम्। शैषिकं रक्तवर्णं श्यामाम्बरधरं किरीटकेयूरहार-प्रलम्बयज्ञोपवीतिनं द्विभुजमेव कारयेत्। अन्येषामपि सर्वेषां रूपवर्णपर्षत्प्रभृतीनि तत्र तत्रोक्तविधिना बुद्ध्या युक्त्या ऊहित्वा कारयेत्।



# २८.परिवारबेरकल्पनम्

## ४.२८.१ ध्रुवस्य कौतुकस्य वा बेरस्यावस्थानमपेक्ष्य परिवारबेरस्यावस्थानम्

**स. २० . ४७, ४८**

स्थानके ध्रुवबेरे तु स्थानकाः परिवारकाः।
आसने तु समासीनाः शयने शयनं न च ।।

ध्रुवे शयाने त्वासीनान् स्थितान्वा कारयेद् बुधः।
कौतुके च स्थिते कुर्यात् स्थानकान् परिवारकान्।।

**क्रि. ५ , ८४, ८५**

[ अत्र 'आसने तु समासीना' इत्यस्य स्थाने 'आसीनानासने स्थितान्' इति पाठः। ]

**क्रि. १७ . ३४, ३५**

मूलालये स्थिते देवे स्थित एवाऽश्रये भवेत्।।

आसीने चासनं वापि स्थानकं च प्रकल्पयेत्।
स्थानकासनशय्यासु शयनेऽन्यतमं मतम्।।

**खि. ७ . ४३ - ४७**

स्थानकं दैवतं यत्र परिवारांस्तथा चरेत्।।

आसीने च तथाऽसीनान् शयाने शयितान् न च ।
आसनं न तु कुर्वीत कुर्यात् स्थानकमार्गतः।।

स्थानके चासने वापि शयने वा विशेषतः।
शैषिकस्य तु सर्वत्र आसनं च न दोषकृत्।।

सर्वानालयपालांस्तु द्वारपालान् विशेषतः।
तत्तद्रूपान् प्रकुर्वीत चित्रमार्गेण तत्र वै।।

चित्रार्धं वा प्रकुर्वीत चित्राभासमथापि वा।

**ज्ञा. ३९ . ७१**

यद्यद्रूपं ध्रुवरूपं तद्वत्परिवाराणाम् । सेनेशमासीनं कुर्यात् सर्वत्र। शयने सर्वेषां स्थानकमासीनं वेति केचित्।

**अ. १२**

स्थानके स्थानकं कुर्यात् आसीने चासनं भवेत्।
शयाने स्थानकं कुर्यात् विपर्यासं न चाचरेत्।।

सर्वेषामासनं कुर्यात् पुराणं मां च शैषिकम्।
वीशं सूर्यं च विघ्नेशं विशेषं चेन्न दोषकृत्।

**नि. १५**

[ अत्र शान्तमित्यधिकम्। ]

## ४.२८.२ मूलालयध्रुवार्चाद्यनुरोधेन परिवारबेरव्यवस्था

**क्रि. १७ . ३६**

मूलालये ध्रुवार्चायाम् आश्रयं च ध्रुवार्चनम्।
ध्रुवकौतुकसंयुक्ते तद्वदेवैकमेव वा।।

**क्रि. ५ . ९०**

ध्रुवकौतुकसंयुक्ते तथा वै परिषद्गणाः।
ध्रुवार्चनं ध्रुवार्चायां विपरीतं न कारयेत्।।

### ४.२८.३ परिवारबेराणां मार्गनियमः

**क्रि. १७ . ४५**

योगे मूलालये कुर्यात् योगमेवाश्रयालयम्।
भोगे भोगं च योगं वा न जातु विरहादिकम्।।

### ४.२८.४ यजमानाश्रमानुरोधेन परिवारबेराणामवस्थानम्

**ज्ञा. ३९ . ७२**

तस्मात् स्थानकसुखासनशयनयोगासनान् क्रमेण आश्रमिणः कुर्वन्तीति भृगुः। तस्मात् सम्यक् परीक्ष्य इच्छानुरूपं कारयेदिति विज्ञायते।

**ज्ञा. ३९. ७१**

### ४.२८.५ नित्यमासीनाः परिवारदेवाः

**क्रि. ५ . ८५ , ८६**

विष्वक्सेनश्च विघ्नेशः रोहिण्यो मातरस्तथा।।

ज्येष्ठा च सर्वदाऽसीना इति पूर्वजदर्शनम्।

**क्रि. १७ . ६०**

[ अत्र सरस्वती इत्यधिकम्। ]

### ४.२८.६ शैलजपरिवारबेराणां वर्णलेपनम्

**ज्ञा. ३९ . ७२**

वर्णहीनं वा उपलजम्। वर्णयुक्ते नाहाद्यविहीनं प्रकल्प्य वर्णं योजयेत्।

### ४.२८.७ परिवारबेराणां वर्णयोगायोगव्यवस्था

**नि. १५**

स्थापनं बहुबेरं चेत् कुर्याद्वर्णसमायुतम्।।

वर्णहीनं कृतं यद्यत् सर्वं नाशयतीत्यतः।
वर्णहीने कृते यत्र एकबेरे विशेषतः।।

परिवारं वर्णहीनं च एकबेरं च कारयेत्।

**४.२८.८ स्थानकपरिवारबेरस्य प्रतिष्ठाफलम्**

**ज्ञा. ३९ . ७२**

आयुः श्रीकीर्तिवृद्धिदं सौम्यं सर्वकामफलप्रदं स्थानकम्।

**४.२८.९ आसनपरिवारबेरस्य प्रतिष्ठाफलम्**

**ज्ञा. ३९ . ७२**

पुण्यवृद्धिदमासनम्।

**४.२८.१० शयनपरिवारबेरस्य प्रतिष्ठाफलम्**

**ज्ञा. ३९ . ७२**

शयनं योगैश्वर्यप्रदम्।

**४.२८.११ परिवारबेराणां उपादानद्रव्यव्यवस्था**

**नि. १५**

यद्द्रव्यं मूलबेरं स्यात् तद्द्रव्यं परिवारकम्।

**स. २० . ४४ , ४५ ; ज्ञा. ३९ . ७१**

**अ. १२ ; क्रि. ५ . ८८**

**क्रि. १७ . ४६**

मूलबेरं तु शूलं चेत् शूलमेवाश्रयालये।
शैले शैलं च शूलं वा लोहे लोहं शिलामपि।।

**य. १६ . २८ , २९**

स्थानके चतुरस्तुल्याः शयने चतुरस्तथा।
शिलयैव विशेषेण ताम्रजं वेति केचन।।

परिवाराणि सर्वाणि तुल्यं पूर्वोक्तवत्सुधीः।
शक्तश्चेच्छिलया सर्वाः प्रतिमाः कारयेत्सदा।।

**४.२८.१२ परिवारबेरस्य एकबेरत्वे उपादानद्रव्यम्**

**क्रि. १७ . ४७**

एकबेरं तु सर्वत्र शैलमेव प्रकल्पयेत्।

**४.२८.१३ कौतुकबेराणां निर्माणे चक्राद्यायुधानामुपादानद्रव्यविवेकः**

**स. २४ . ११**

चक्रादीनयसा वापि कारयेदायुधान् बुधः।

**४.२८.१४ ध्रुवबेरद्रव्येणैव परिवारबेराणां कल्पननियमः क्वचिदपवादश्च**

**स. २० . ४५ , ४६**

दुर्गागरुडसूर्यास्तु सर्वत्रापि शिलामयाः।।

मृण्मया दारवा वापि विपरीतं न (तु?)दोषकृत्।
विघ्नेशविष्वक्सेनौ च तथैवेति च केचन।।

**ज्ञा. ३९ . ७१**

अत्र गुहम्, धिषणाम्, ज्येष्ठामित्यधिकम्।

**क्रि. ५ . ८९**

[ अत्र स्कन्द इत्यधिकम्। ]

**खि. ७ . ४२ , ४३**

[ अत्र रौद्रीं, स्कन्दं कलिपत्नीं चेत्यधिकम्। ]

**नि. १५**

[ अत्र ईश इत्यधिकम्। ]

**४.२८.१५ परिवारबेराणामाभासार्चननिषेधः**

**य. १६. ३०**

आभासं परिवाराणामर्चनं नाचरेद् बुधः।
सार्धं पारिषदैः श्रेष्ठं हीनं नैवाचरेत्क्वचित्।।

**४.२८.१६ परिवारध्रुवबेराणां मानम्**

**प्र. ७ . ९ - ११**

देवस्य कण्ठसीमान्तं बाह्वन्तं स्तनसम्मितम्।।

नाभ्यन्तं वा विशेषेण परिवारोदयं क्रमात्।
धात्रादिभूतपर्यन्तं परिवारान् विशेषतः।।

वर्णवाहनकेत्वाद्यैर्नामनक्षत्रपूर्वकम्।
मया क्रियाधिकारे तु व्यक्तमुक्तं तु लक्षणम्।।

**क्रि. ५ . ८६, २७३ ; य. २१ . ३१, ३२**

**नि. ९**

मूलबेरवशात्सर्वाः प्रतिमास्सर्वमाचरेत्।
यदीच्छेत् स्थान(मान ?) वर्णे तु कर्तुरिच्छां समाचरेत्।।

**य. १२.१९**

सर्वेषां परिवाराणां मानं देवीसमं भवेत्।

### ४.२८.१७ परिवारकौतुकबेराणां मानम्

**क्रि. ५ . ८७, ८८**

तत् त्रिभागैकभागादिमानैः कुर्याच्च कौतुकम्।।
देवेशाधिकमानेन परिवारान्न कल्पयेत्।

**क्रि. ५ . ८७**

### ४.२८.१८ ब्रह्मशङ्करयोः परिवारबेरयोः मानम्

**वि. १५ . ७३**

ब्रह्माणं शङ्करं च ध्रुवबेरसमं नवांशोनमष्टांशोनं वा कारयेत्।

**य. १२ . २०**

### ४.२८.१९ ब्रह्मेशादिपरिवारबेराणां मानम्

**क्रि. ५. ८७ ; ५ . २७४**

ब्रह्मेशावमितं सूर्यं तत्समान्वा प्रकल्पयेत्।

### ४.२८.२० मह्यादिदेवीपरिवारबेराणां मानम्

**अ. १२**

महीलक्ष्मीसरस्वत्योर्मातृरोहिणिपार्वती।।
नवतालाधिकं भागं मानमेतत्प्रकल्पयेत्।

### ४.२८.२१ मुन्यादिपरिवारबेराणां मानम्

**वि. १५ . ७२, ७३**

मुन्योर्वीशशैषिकयोरन्येषां परिवाराणां च तत्समं पादहीनमर्धं पादं वा तत्तदालयवशाद्वा कारयेत्।

## ४.२८.२२ भक्तपरिवारबेराणां मानम्

**क्रि. ६ . २८, २९**

बाह्वन्तं वा स्तनान्तं वा नाभ्यन्तं वा ध्रुवस्य च।
भक्तानां परिवाराणां ध्रुवबेरोदयं मतम्।।

तत्तद्ध्रुवानुरूपाणि[1] कौतुकानि च कारयेत्।

## ४.२८.२३ दशतालमानेन मेयानि परिवारबेराणि

**खि. १५ . १९४**

ब्रह्मा विष्णुर्हरश्चेति त्रयस्ते दशतालकाः।

**अ. १२**

## ४.२८.२४ मध्यमदशतालमानेन मेयानि परिवारबेराणि

**प्र. ९ . ३७**

तद्देवीनां[2] सरस्वत्या मध्यमं दशतालकम्।

## ४.२८.२५ अधमदशतालमानेन मेयानि परिवारबेराणि

**प्र. ९ . ३७, ३८**

चन्द्रेन्द्रानलकीनाशवरुणानलशूलिनः।।

ऋषयो वसवो रुद्रा मार्कण्डेयोऽमितो भृगुः।
आर्याश्चैव गुहो हीनदशतालमिता मताः।।

## ४.२८.२६ उत्तमनवतालमानेन मेयानि परिवारबेराणि

**प्र. ९ . ४०**

दैत्ययक्षेशकबन्धांश्च सिद्धगन्धर्वचारणाः।
कुजार्कराहवः श्रेष्ठनवतालेन सम्मताः ।।

---

1 तत्तत्परिवारध्रुवानुरूपाणीत्यर्थः। 2 भगवद्देवीनाम्।

**४.२८.२७ नवार्धतालमानेन मेयानि परिवारपबेराणि**

**खि. १५ . १९४**

इन्द्रो रविस्तथा स्कन्दो नवार्धमितमानकाः।।

**अ. १२**

**४.२८.२८ नवतालमानेन मेयानि परिवारबेराणि**

**प्र. ९ . ३९ , ४१**

मरुतोऽपि च यक्षेशदेववध्वः शुभाः ग्रहाः।
तथान्ये तु त्रिधा साध्या नवतालमिता मताः।।
--------------------------------।।

नवतालैर्मुनींश्चैव गणांश्चैव तु मानयेत्।
उरगाश्चारणाश्चान्ये नवतालमितोदयाः।।

**खि. १५ . १९५**

इतरे[1] लोकपालाश्च नवतालमितास्स्मृताः।

**स. २१ . २६**

**अ. १२**

[ अत्र सेनेशं गरुडमित्यधिकम्। ]

**४.२८.२९ अष्टतालमानेन मेयानि परिवारबेराणि**

**खि. १५ . १९५, १९६**

मानुषाकृतयः शुद्धाः न्यग्रोधपरिमण्डलाः।।
अष्टतालाः नरा ज्ञेया ------------।

**अ. १२ ; प्र. ९ . ४२**

---

1 इन्द्रादितरे इत्यर्थः।

**४.२८.३० सप्ततालमानेन मेयानि परिवारबेराणि**

**खि. १५ . १९६**

----------------जघन्याः सप्ततालकाः।

**अ. १२**

**प्र. ९ . ४२**

[ अत्र जघन्य इत्यस्य स्थाने प्रेत इति। ]

**४.२८.३१ षट्तालमानेन मेयानि परिवारबेराणि**

**खि. १५ . १९६**

षड्भिः[1] कुब्जास्समाख्याताः--------।

**अ. १२**

[ अत्र कुब्ज इत्यस्य स्थाने कूष्माण्ड इति विशेषः। ]

**प्र. ९ . ४२**

**४.२८.३२ पञ्चतालमानेन मेयानि परिवारबेराणि**

**खि. १५ . १९६**

------------ पञ्चतालास्तु वामनाः।।

**अ. १२ ; प्र. ९ . ४२**

**४.२८.३३ चतुस्तालमानेन मेयानि परिवारबेराणि**

**खि. १५ . १९७**

चतुस्तालास्तथा भूताः ------------।

**अ. १२ ; प्र . ९ . ४३**

---

1 तालैरित्यनुषङ्गः।

**४.२८.३४ त्रितालमानेन मेयानि परिवारबेराणि**

**खि. १५ . १९७**

--------- त्रितालाः किन्नराः स्मृताः।

**अ. १२ ; प्र. ९ . ४३**

**४.२८.३५ त्रितालस्य त्रैविध्यम्**

**प्र. ९ . ४४**

श्रेष्ठमध्यकनिष्ठानि त्रितालानां तु तत्र वै।।

**४.२८.३६ द्वितालमानेन मेयानि परिवारबेराणि**

**प्र. ९ . ४३**

कूश्माण्डा द्वियवा(तला ?) श्चैव ------।।

**अ. १२**

[ अत्र कूश्माण्डा इत्यस्य स्थाने मिथुनमिति विशेषः। ]

**४.२८.३७ एकतालमानेन मेयानि परिवारबेराणि**

**प्र. ९ . ४३**

---------------- कबन्धास्त्वेकतालकाः।।

**अ. १२**

[ अत्र कबन्ध इत्यस्य स्थाने वालखिल्य इति विशेषः। ]

**४.२८.३८ अनपायिपरिवारदेवानां श्रीभूतादीनां स्थापनस्थानम्**

**क्रि. ५ . ९४, ९५**

श्रीभूतश्चैव गरुडः प्रथमावरणे स्थितौ।

चक्रध्वजाब्जयूथेशा द्वितीयावरणादिषु।।

एतेऽनपायिनः प्रोक्ताः विष्वक्सेनसमन्विताः ।
प्राकाराश्रयवासाः स्युः अन्ये[1] वास्तुनिरीक्षकाः ।।

**वा. ५**

पृथग्देशं प्रकल्प्यैवमङ्गिरोक्तविधानतः ।।

अथवा कारयेद्विद्वान् कल्पयित्वा विचक्षणः ।
तस्यालयं पृथक् चैव मूलपादान्तमालयम् ।।

त्रिहस्तायतविस्तारं मण्डपाकारमुच्यते ।
तस्य पादसमं द्वारं कवाटं सह कल्पयेत् ।।

सुवर्णायुधसंयुक्तं परिषट्कसमायुतम् ।
यत्तद्विवक्षितं कल्प्यं पूर्वं तत्र प्रकल्पयेत् ।।

अथवा कल्पयेद्विद्वान् पीठं तत्र प्रकल्पयेत् ।
यस्यां दिशि निरीक्ष्यं स्यात् तत्र द्वारं प्रकल्पयेत् ।।

द्वारस्य वामपार्श्वे तु विष्वक्सेनं प्रकल्पयेत् ।
भूतद्वयं तथा तार्क्ष्यं तथा चैवामितं पुनः ।।

चक्रशङ्खारविन्दं च अक्षहेत्यनपायिनः ।
एतैर्दशभिरग्रैव ? शान्तमेकं तु वामतः ।।

सोमईशानयोर्मध्ये नित्यं शान्तं प्रकल्पयेत् ।
वीशं प्रतिमुखं कुर्यात् अन्यत् सर्वं विपर्ययम् ।।
एतेषामनपायिनां कल्पयेद्देशिकोत्तमः ।
अनपायं विना यत्र देवेशो न वसेद् बुधाः ।।

---

1 अनपायिभिन्नाः परिवारदेवता इत्यर्थः ।

तस्मात् सर्वप्रयत्नेन देवाग्रे कल्पये(द) र्चनम्।
एवंक्रमेण कर्तव्यं विपरीतं न कारयेत्।।

## ४.२८.३९ श्रीभूतादीनामाभिमुख्यम्

**क्रि. ५ . ९२, ९३**

श्रीभूतारि[1] ध्वजाम्भोज[2] यूथेशाश्चा[3] क्षहा[4] तथा।।
कल्प्या बहिर्मुखा एव वीशस्त्वभिमुखो[5] मतः।
देवाग्रे स्थापयेदेतान् तत्तदावरणे पृथक्।।

**खि. १५ . २२१**

वीशं प्रतिमुखं कुर्यादन्यथा तु विपर्ययः।।

**वि. २० . ११९**

एते[6] अनपायिनः। एतेषु श्रीभूतगरुडौ प्रासादपार्श्वे, चक्रशङ्ख-ध्वजयूथाधिपपाकोर्जुनान् बलिपीठपार्श्वे च संयोज्यार्चयेदिति केचित्।

## ४.२८.४० श्रीभूतस्य लक्षणम्

**वि. २० . ११७**

प्रथमावरणस्य चतुर्भागात् त्रिभागे, सोपानमध्ये वा श्वेताभो रक्ताम्बरधरः बहिर्मुखः ब्रह्मचारी दण्डायुधः सिंहध्वजवाहनः फाल्गुने भरणी (रोहिणी) जातः कुम्भशब्दरवो भूताद्यक्षरबीजः श्रीभूतः।

**क्रि. ५ . २७२**

भूताकृतिं वायुभोत्थं हंसवाहनमेव च ।
आषाढे रोहिणीजातं हृदयेऽञ्जलिसंयुतम्।।

---

1 चक्रम् 2 शङ्खः 3 विष्वक्सेनः 4 पाकोर्जुनः 5 देवाभिमुख इत्यर्थः।
6.श्रीभूतगरुडचक्रशङ्खध्वजयूथाधिपाक्षहन्तार (पाकार्जुना) इत्यर्थः।

**क्रि. ५ . १३०,१३१ ; ३०८ - ३१०**

रक्ताम्बरधरं चैव द्विभुजं जटिलं तथा।
सोपानमध्ये श्रीभूतमर्चयेत् बहिराननम्।।

विरजेशं भूतकेतुं ज्येष्ठमासे धनिष्ठजम्।

------------------------------

------------------------------

------------------------------

तन्मध्ये चाधिरूढः स्यात् दण्डपाणिर्बहिर्मुखः।
महाभूतस्य तद्रूपं जत्रोरूर्ध्वं सितेतरम्।।

जत्रोरधो रक्तवर्णं रुक्माभोरुयुगं तथा।
जान्वोरधस्तथा श्वेतमेवं वर्णसमन्वितम्।।

विरजेशो भूतकेतुः महाचातकवाहनः।
ज्येष्ठे मासि धनिष्ठायां जातः स्तोकोऽस्य शैषिकः।।

## ४.२८.४१ गरुडस्य लक्षणम्

**क्रि. ५ . १६५ - १७०**

गरुडो वेदमूर्तिस्तु तप्तहाटकसन्निभः।।

शुकपिञ्छाम्बरधरः झल्लरीमेखलायुतः।
किङ्किणीजालसंयुक्तः कुण्डलाङ्गदहारधृत्।।

छन्नवीरोत्तराबद्धः कौबेरमकुटोज्ज्वलः।
तैष्ये स्वातिदिने जातस्तथा श्वसनवाहनः।।

त्रिवृत् तस्य शिरः साम गायत्रं चक्षुरेव च ।

आत्मा स्तोमाह्वयं साम वामदेव्यं तनुस्तथा।।

बृहद्रथन्तरे पक्षौ यज्ञायज्ञियपुच्छकः।
छन्दांस्यङ्गानि वै तस्य यजूंषि च शफाः स्मृताः।।

एवं ध्यात्वार्चयेत् वीशं वाहनानां तु वृद्धये।

**वि. २० . ११७, ११८**

[ अत्र त्रिशीर्षः, पञ्चवर्णमिश्रितः, भुजगाभ्यां युक्तः गुञ्जाभनेत्रः हृदयेऽञ्जलिसंयुक्तः तुण्डायुधः गणाद्यक्षरबीज इत्यधिकम्।]

**खि. १५ . ५६ - ६५**

वेदानामुत्तमां मूर्तिं गरुडं नवतालकम्।
कुर्याद्धाटकवर्णं च शुकपिञ्जरवाससम्।।

झल्लरीमेखलाबद्धकिङ्किणीजालशोभितम्।
अङ्गदे कुण्डले कुर्याद्धस्तयोः कर्णयोरथ।।

छन्नवीरोत्तराबन्धं कौबेरमकुटं तथा।
बाह्वोराकुञ्चितौ पक्षौ पञ्चवर्णैश्च सुन्दरौ।।

पक्षयोः कीचकान् कुर्यादर्धायामसुसंयुतान्।
आमध्यबन्धसंयुक्तान् विवृतान् कोर्पराश्रितान्।।

बिन्दुपिञ्जरवर्णाक्तान् पञ्चवर्णैश्च मिश्रितान्।
तथा मरकताभां च नासिकां चित्रकृच्चरेत्।।

तिस्रश्चूडास्समाख्याता मकुटस्य तु शोभनाः।
उपर्युपरि सञ्छन्ना युक्त्या बन्धूसन्निभाः।।

आसने चासनं तस्य यत्र (वज्र) पीठमुदाहृतम्।
एकं जानुनि पीड्याथ ब्रह्मासनमथापि वा।।

शैशवं नागराजं च बाहुलम्बितमाचरेत्।
आमूलश्यामलं रम्यं कुञ्जरं तत्र शैषिकम्।।

तस्याभरणवत् कुर्यात् स्मयमानञ्च गर्वितम्।
वाहनानाञ्च सम्पत्तिः गरुडस्थापनाद्भवेत्।।

पदार्थिनां च सर्वेषामितरेषां च सर्वथा।

**स. २१ . २२ , २३**

**४.२८.४२ चक्रस्य लक्षणम्**

**क्रि. ५ . २५९ - २६१**

कुर्याच्चक्रं नराकारं चक्रचूलितमस्तकम्।
चक्रं बहिर्मुखं कुर्यात् शरोऽङ्गाराग्निसन्निभम्।।

मुष्टिकेशं धूमकेतुं भानुहेतिं तथैव च ।
विवृत्तवाहनं चैव कार्तिके कृत्तिकोद्भवम्।।

पादहीनं वैनतेयात् हीनमध्यर्धमेव वा।
आस्थानमण्डपे चैव स्थापयेद्देशिकोत्तमः।।

**खि. १५ . १८० - १८२**

**स. २१ . १९**

[ अत्र रक्ताभम् इत्यधिकम्। ]

**ज्ञा. ४९ . ८५**

[ अत्र रविमण्डलाभम् इत्यधिकम्। ]

**वि. २० . ११८**

[ अत्र रक्ताम्बरधरः पुष्टिकेशः चकारबीज इत्यधिकम्। ]

### ४.२८.४३ ध्वजदेवस्य लक्षणम्

**क्रि. ५ . २६२ - २७०**

तस्मात् ततो ध्वजस्थाने बिम्बं कुर्यात् यथाविधि।
ध्वजस्थं गरुडं कुर्यातदासने चैकमर्पितम्।।

वामपादं समाकुञ्च्य सम्यक् प्रसृतबाहुकम्।
दक्षिणेनैकहस्तेन पद्ममुत्पलमेव वा।।

अष्टाङ्गुलमथो नालं भागं पुष्पस्य मण्डलम्।
पुष्पापेक्षमुखं कुर्यात्सानन्दं स्मेरगर्वितम्।।

एतद्ग्रामहितं प्रोक्तं जयार्थं चान्यदिष्यते।
जानुना पीडितं पीठं सव्येनैवेतरेण वा।।

वसुधां वापि जिघ्रन्तमूर्ध्वदृष्टिं च कारयेत्।
पद्मासने समासीनं सुखस्यास्पदमव्ययम्।।

ऋषीणां च हितार्थाय कुर्याद्देवं विचक्षणः।
प्राङ्मुखं च ध्वजं कुर्यान्न देवं वीक्ष्य सुस्थितम्।।

एवं ध्वजविधिं कर्तुमशक्तो मण्डपे तथा।
समालिख्यार्चयेत् तत्र ध्वजदेवं खगाधिपम्।।

ऊर्ध्वे शङ्खं च भेरीं च वायुवाहनमत्र वै।
घण्टारवं च वैशाखे वायुभे जातमुत्तमम्।।

हाटकाभं नीलवस्त्रं ध्वजमेवं प्रकल्पयेत्।

**खि. १५ . १८२ - १८८**

[ अत्र वज्रं वा विजिघृक्षन्तमुग्रदृष्टिमिति विशेषः।]

**स. २१ . ३५**

**वि. २० . ११८, ११९**

तत्पूर्वे[1] हाटकाभः शुक्लाम्बरधरः ऊर्ध्वकेतुः शङ्खकेतुः वायुवाहनः सहारवः[2] स्वातीजातो जकारबीजो जयप्रियापतिर्द्विभुजः पद्मधरः आसने दक्षिणं पादं प्रसार्य वाममाकुञ्च्यासीनः सर्पयुक्तो हृदयेऽञ्जलिसंयुक्तो जयो ---------------------------------

## ४.२८.४४ शङ्खस्य लक्षणम्

**वि. २० . ११८**

तत्पूर्वे[3] पाञ्चजन्यो दुग्धाभो रक्तवस्त्रधरो भूताकृतिः शिरसि शङ्खभृत् वियद्गतिध्वजो वियद्गात्रायुधो हंसवाहनः कण्ठशब्दरवो वारुणीपतिः शकारबीजोऽनलजः।

**क्रि. ५ . २६९, २७०**

जलजं चन्द्रवत् कुर्यात् मकुटे शङ्खसंयुतम्।।

शङ्खाभं नीलवस्त्रं च द्विभुजं वारुणीपतिम्।
वियद्गतिध्वजं चैव वियद्गत्यायुधं तथा।।

**स. २१ . १९ ; ज्ञा. ४९ . ८५**

**खि. १५ . १८८ - १९२**

जलजं चक्रवत् कुर्यान्मकुटे शङ्खसंयुतम्।।

---

1 शङ्खपूर्वे इत्यर्थः। 2 सिंहरवः - पाठान्तरम्। 3 चक्रपूर्वे इत्यर्थः।

तद्वर्णं चैव युक्त्या वै नीलवाससमच्युतम्।
यूथाधिपस्य पीठे वै बिम्बं कुर्याद्विचक्षणः।।

बिम्बं चेत् क्रियते तस्य यमकं पीठमुच्यते।
स्थले पादासने चैव कर्तव्यं तदधःस्थले।।

पूर्वं च पश्चिमे कुर्यात् पश्चिमं वृत्तकं विदुः।
वृत्तं चाप्यधिरुह्यैवं दण्डपाणिर्बहिर्मुखः ।।

चतुरश्रे तथा चोर्ध्वे भूतान् सर्वांश्च कारयेत्।

### ४.२८.४५ यूथाधिपस्य लक्षणम्

**वि. २० . ११९**

तत्पूर्वे[1] यूथाधिपः पीठे बहिर्मुखः श्वेताभो रक्तवस्त्रधरो भूताकारो द्विभुजो दण्डधरो भूतकेतुर्महाचातकवाहनः रविजेशो गतिशब्दरवः श्रविष्ठाजो भूताद्यक्षरबीजो महाभूतः

### ४.२८.४६ भूतपीठस्य कल्पनोद्देशपूर्वकं लक्षणम्

**क्रि. ५ . २९५ - २९८**

सर्वदेवमयं पीठं सर्वलोकमयं तथा।।

सर्वलोकस्य रक्षार्थं कारयेल्लक्षणान्वितम्।
रक्षः पिशाचभूतानां नाशनं धान्यवर्धनम्।।

श्रीसौभाग्याभिवृद्धिश्च भवेत् पीठे कृते नृणाम्।
प्रमुखे पृष्ठतो वापि कारयेद्यत्र यत्र हि।।

(तत्र तत्र च संस्थाप्य तत्र तत्र समर्चयेत्)।
शिल्पशास्त्रोक्तमार्गेण कुर्यात् पीठं सलक्षणम्।।

---

1 ध्वजपूर्वे ।

अष्टाक्षं (श्रं ?)षोडशदलमथवा कारयेद्बुधः।
कुर्वीत चतुरश्रं वा वृत्तं वापि च कारयेत्।।

(द्वारं समुदितं तस्य तद्द्वारमुखमुच्यते।
एवं च त्रिविधं कुर्यात् भूतपीठस्य लक्षणम्।।)

**४.२८.४७ महाभूतपीठलक्षणम्**

**क्रि. ५ . २९९ - ३०७**

अथवा कारयेद्विद्वान् विमानस्यानुरूपकम्।
आयामं च विमानस्य पञ्चधा विभजेत्पुनः।।

द्व्यंशं पीठस्य विस्तारं त्र्यंशकं वापि कारयेत्।
चतुर्धांशं तु कृत्वा तु प्रासादस्यानुरूपकम्।।

द्व्यंशकं यत्र कुर्वीत भागं षड्विंशदाचरेत्।
चतुर्धांशं तु यत्रैव द्वात्रिंशद्भागमुच्यते।।

पूर्वोक्तेन विधानेन भागं भागेन योजयेत्।
नित्यनृत्तं च यत्र स्यात् गोपुरात् प्रमुखेऽपि च।।

गोपुरस्यैव पार्श्वे तु दक्षिणोत्तरतः क्रमात्।
सूत्रं कृत्वा तु यत्रैव गृहभागं विभज्य च ।।

वीथिं दक्षिणतः कुर्यात् सूत्रस्यैव तु दक्षिणे।
पीठस्योत्तरतः कुर्यात् सूत्रस्यैव तथोत्तरे।।

चतुर्दण्डं समारभ्य यावद्विस्तारसंयुतम्।
गृहभागं विभज्यैव देवदासीश्च कल्पयेत्(?) ।।

अन्तर्वीथ्यां तु यत्रैव मध्यसूत्रं तु मध्यतः।
पूर्वोक्तेन विधानेन पीठं कुर्यात् विचक्षणः।।

इन्द्रादिषु चतुर्दिक्षु भूतरूपं प्रकल्पयेत्।
शङ्खनादसमायुक्तं पञ्चतालेन कारयेत्।।

**स. २१ . ३६, ३७**

## ४.२८.४८ अक्षहन्तुः लक्षणम्

**वि. २० . ११९**

तत्पूर्वे पीठे पाकार्जुनो रुक्माभः पद्मनेत्रः कृष्णकुञ्चितमूर्धजः भूताकारः कृष्णवस्त्रधरः कुण्डोदरो द्विभुजो दण्डहस्तः स्वातीजातः सिंहनादरवः सिंहध्वजवाहनो भूताद्यक्षरबीजः सुमुखीपतिर्विष्णुभूतः पाकः 'अर्जुनं हस्तम् अक्षहन्तारं विष्णुभूत' मिति।

## ४.२८.४९ विष्वक्सेनस्य लक्षणम्

**क्रि. ५ . ९२ , १५५ , १६० - १६५**

ईशानसोमयोः मध्ये दक्षिणाभिमुखोऽमितः।

-----------------------------

शान्तस्सोमेशयोर्मध्ये ह्यासीनो दक्षिणामुखः।
श्रीवत्सं ब्रह्मसूत्रं च विना सर्वं हरेरिव।।

-----------------------------

आकुञ्च्य दक्षिणं पादं वामं पादं प्रसार्य च ।
जयया सार्धमासीनः पुष्पहस्तोऽग्निसन्निभः।।

गदाशक्तिधरो वाथ पूज्यः स्थानाभिवृद्धये।
चतुर्भुजो यदि भवेत् शङ्खचक्रे गदावरौ।।

सस्यश्यामनिभौ देव्यौ सर्वमन्यच्च पूर्ववत्।
पूर्वाषाढासमुद्भूतौ मासि भाद्रपदे तथा।।

ध्रुवकौतुकसंयुक्तमुत्तमं परिचक्षते।
मध्यमं चैकबेरं स्यातदधमं पीठपूजनम्।।

ग्रामस्य यजमानस्य चानुकूलप्रमाणतः।
विष्वक्सेनं प्रकुर्वीत मूलबेरवशात्तु वा।।
आयादयो न कर्तव्या मूलबेरवशाद्यदि।

**स. २१ . १९ - २२**

[ अत्र विष्वक्सेनस्य बिम्बं नवतालमानेन इत्यधिकम्। ]

**खि. १५ . ५२ - ५५**

[ अत्रापि विष्वक्सेनस्य बिम्बं नवतालेन इत्यधिकम्। ]

**वि. २० . ११७**

उदक्प्राकारपार्श्वे विमानपार्श्वे वा कुबेरैशान्ययोर्मध्ये दक्षिणाभिमुखः सिंहासने समासीनोऽग्निवर्णः पीतवासाः श्रीवत्सं च, ब्रह्मसूत्रं च विना हरिवत् भूषणैर्युक्तो द्विभुजः पुष्पपाणिः, शक्तिदण्डभृद्वा, जयापतिः शृङ्गकेतुः पुष्परथवाहनः पूर्वाषाढोद्भवः पुष्परवो विद्याद्यक्षरबीजो विष्वक्सेनः।

**य. २१ .पृ. ८९, ९०**

देवालयेऽष्टभागे तु सप्तांशे वांऽशकं तथा।
तस्य विस्तारमस्योक्तमुत्सेधं चानुपूर्वकम्।।

तत्प्रासादस्य मानेन ध्रुवबेरं प्रकल्पयेत्।
मूलबेरस्य मेढ्रान्तं कनिष्ठोदयमीरितम्।।

उत्तमं बाहुसीमान्तं मध्ये षड्विंशदंशके।
एकैकांशकवृद्ध्या तु सप्तविंशतिधा भवेत्।।

मूलबेरवशात् कुर्यात् कौतुकाद्यं पुरोक्तवत्।
द्विभुजं नवतालेन रक्तवर्णं प्रकल्पयेत्।
नवार्धतालमानेन श्यामवर्णं चतुर्भुजम्।।

देवीयुक्तं वियुक्तं वा जया नामेति तस्य वै।
मोक्षार्थी द्विभुजं कुर्याद्विजयार्थी चतुर्भुजम्।।
पुत्रकामी जयायुक्तं ज्ञानार्थी रहितं तथा।
औत्सवार्चायुतं वापि तयोरन्यतरान्वितम्।
कौतुकं तत्र कर्तव्यमेकबेरमथापि वा।।

औत्सवं प्रथमं कृत्वा सर्वत्रासीनमर्चयेत्।
पुनः शक्तौ विमानाद्यं कल्पयेत् तद्ध्रुवादिकम्।।

तत्कौतुकोत्सवार्चानां प्रमाणं तुल्यमाचरेत्।
पलाशपुष्पमूलाभं पीताम्बरवरान्वितम्।।

अभयं दक्षिणं हस्तं वामं कटकमेव च ।
चतुर्भुजं तु कुर्याच्चेच्छङ्खचक्रधरौ परौ।।

अभयं कटकौ पूर्वौ श्यामवर्णं प्रकल्पयेत्।
श्रीवत्सं ब्रह्मसूत्रं च कौस्तुभं च विनैव तम्।।

देवदेवेन सदृशं सर्वं शान्तं प्रकल्पयेत्।

---------------------------

आसने दक्षिणं पादं न्यस्य वामं प्रसार्य च ।
वज्रं दक्षिणहस्तेन वामेनाब्जं गदां तु वा।।

पद्मासने समासीनं मकुटादिविभूषितम्।
तं कुर्यादथवा चक्रशङ्खपाणिसमन्वितम्।।

### ४.२८.५० विष्वक्सेनपत्न्याः जयाया लक्षणम्

**य. २१ . पृ.९०**

तप्तचामीकरप्रख्या जयादेवी सुमध्यमा।।

दक्षिणं पादमाकुञ्च्य वामपादं प्रसार्य च ।
आसीनामब्जहस्तां तां कुर्यादमितपार्श्वतः।।

शान्तं निरीक्षमाणां तां देवमानुषमध्यमे।
स्थापयेच्छुभनक्षत्रे सुमुहूर्ते शुभोदये।।

### ४.२८.५१ भगवतो लम्बयज्ञोपवीतस्य ब्रह्मसूत्रेति संज्ञा

**क्रि. ५ . १५६ , १५९**

प्रलम्बासुरसङ्ग्रामे ह्युपवीतं तु शार्ङ्गिणः।
तदायुधपरिच्छिन्नम् एकसूत्रं प्रलम्बितम्।।

तदभ्यर्थनया तच्च तथैव धृतमेव हि।
लम्बयज्ञोपवीतित्वं ततः प्रभृति शार्ङ्गिणः।।

तदसाधारणं नाम लोकेऽस्मिन् प्रथितं पृथु।
तत्सूत्रं लम्बितं छेदात् गत्वाधो दक्षिणस्तनात्।।

वामांसात् सव्यगुल्फान्तं लम्बितं तनुमध्यतः।
तद् ब्रह्मसूत्रमित्युक्तं तदसाधारणं हरेः।।

### ४.२८.५२ अनन्तस्य श्रैष्ठ्यम्

**खि. १५ . २२३**

अनन्तः शुभ उद्दिष्टः अनपायिषु सर्वथा।
अनपायिविहीने तु सर्वं दुष्टं भविष्यति ।।

### ४.२८.५३ इन्द्रस्य लक्षणम्

**खि. १५ . ६ - १४**

आसीनं द्विभुजं कुर्यादासने वज्रपाणिनम्।
स्थितं शच्या महिष्याऽस्य श्रेष्ठमासनमुच्यते।।

किरीटं मकुटं तस्य पार्श्वे वर्जितदण्डकम्।
हस्ते तु वज्रं कर्तव्यमासने चेन्निरायुधम्।।

इन्द्राणीं दक्षिणे कुर्याद्वामे च छन्दगां शुभाम्।
पद्मामिव तथेन्द्राणीमिलामिव च छन्दगाम्।।

पद्माभूमी यथा विष्णोरिन्द्रस्यैते मते तथा।
घृताच्यलम्बुके चापि कुर्याद्वै परिचारिके।।

लोमशं च त्रितं चैव पूजकौ तौ समर्चयेत्।
मां च पुण्यमिव स्थाने दक्षिणे वाम एव वा।।

घृताची श्यामवर्णा चालम्बुकोत्पलपत्रभा।
लोमशोऽञ्जनवर्णश्च त्रितो गोधूमसमप्रभः।।

पृथक् चेदालयं तस्य परिवारांस्तु कारयेत्।
निर्माल्यधारिणं वीरं रक्तोत्पलदलप्रभम्।।

गोपुरागारयोर्मध्ये स्थापयेद्द्वारणाधिपम्।
स्थापयेच्चापि पर्जन्यं महाशनिसमन्वितम्।।

पर्जन्यं श्यामवर्णं च सर्वलोकशुभावहम्।
वज्रस्थानसमायुक्तं रथस्थानसमन्वितम्।।

**क्रि. ५ . १४१, १४२**

इन्द्रः सस्यनिभः श्यामः द्विभुजः कुलिशायुधः।।

शचीशः पीतवस्त्रश्च ज्येष्ठाजः श्रावणे तथा।
किरीटी मकुटी दण्डी चासीनश्चेन्निरायुधः।।

**स. २१ . २४**

[ अत्र नवर्धतालमानेन कुर्यादित्यधिकम्। ]

### ४.२८.५४ अग्नेः (दिक्पालस्य) लक्षणम्

**खि. १५ . १५ - १७**

अग्निं कुर्याद्यथान्यायं नवतालेन मानतः।
अग्निं किंशुकवर्णाभं प्रज्वलत्केशसंयुतम्।।

हयस्तु वाहनं तस्य रोहितो नाम नामतः।
शङ्खश्च शैषिकस्तस्य कुन्देन्दुसदृशप्रभः।।

स्वाहा स्वधा उभे देव्यौ मुक्ताहेमनिभे सती।
शक्तिरस्यायुधं दिव्यं सर्वामरपुरोधसः।।

**स. २१ . २५**

**क्रि. ५ . १४३, १४४**

कृत्तिकास्वनले जातो मार्गशीर्षे तु मासि वै।
किञ्जल्कपुञ्जसदृशः लोहिताक्षोऽजवाहनः।।

देव्यौ स्वाहा स्वधा तस्य शक्तिरायुधमस्य वै।

### ४.२८.५५ यमस्य लक्षणम्

**खि. १५ . १८ - २२**

कृष्णाम्बुदनिभं कुर्याच्छमनं दण्डपाणिनम्।

पाशं वामकरे कुर्याज्जानु च व्रणसंयुतम्।।

माता तेन परामृष्टा धात्री मातृस्वरूपिणी।
मातृशापात्ततः पादो दक्षिणो व्रणसंयुतः।।

सर्वभरणसंयुक्तः कुशेशयविलोचनः।
देवी सत्यव्रता नाम सुता सा कृष्णवर्त्मनः।।
कुन्देन्दुसदृशाभा सा वर्णतः परिकीर्तिता।
मुनिः शङ्खिलको नाम पूजकः श्वेत उच्यते।।

महिषो वाहनं तस्य व्यालध्वजसमन्वितः।
शैषिकस्त्वचलो नाम यमस्य परिकीर्तितः।।

**क्रि. ५ .१४४, १४५**

फाल्गुने भरणीजातो यमो नीलोत्पलप्रभः।।
सत्यव्रतापतिर्दण्डी पाशी महिषवाहनः।

**स. २१ . २६**

**४.२८.५६ निर्ऋतेः लक्षणम्**

**खि. १५ . २३, २४**

त्रिणेत्रो निर्ऋतिर्नीलः शूलपाणिः द्विबाहुकः।
पत्नी च भञ्जनी नाम वर्णतः सस्यसन्निभा।।

शैषिकः कलभो नाम किंशुकाभस्स उच्यते।
शार्दूलो वाहनं तस्य निर्ऋतेः समुदाहृतः।।

**स. २१ . २७**

**क्रि. ५ . १४५, १५६**

[ अत्र आरम्भाधिपतिस्तैष्ये मूलजः इत्यधिकम्। ]

### ४.२८.५७ वरुणस्य लक्षणम्

**खि. १५ . २५ - २९**

वरुणो नीलवर्णश्च रक्ताम्बरधरः शुचिः।
दण्डपाशकरस्तस्य वाहनं गज उच्यते।।

शैषिकः पुण्यनामा च देवी च कनका मता।
कनका नाम शर्यातेर्गन्धर्वस्य सुता मता।।

वरुणस्य प्रिया देवी सती कुन्देन्दुसप्रभा।
ध्वजः सिंहः समाख्यातो मुनिर्वत्सल उच्यते।।
---------------------------------।।

सुप्रतीको बलाकाभो वत्सलोऽग्निसमप्रभः।।
सर्वाभरणसंयुक्तो देवो भोगेश्वरो वरः।

**स. २१ . २७**

**क्रि. ५ . १४६,१४७**
[ अत्र चैत्रे शतभिषक् जातः, प्रतीच्यां प्राङ्मुख इति च अधिकम्। ]

### ४.२८.५८ वायोर्लक्षणम्

**खि. १५ . २९- ३१**

जवनश्चाच्छसङ्काशो वायू राजा महानकः।।

असिहस्तश्च तं कुर्याद्दिव्यं मकुटमुत्तमम्।
अञ्जना नाम तद्देवी वैदूर्यसदृशप्रभा।।

अर्धासने च तां कुर्याद्वाहनं गज उच्यते।
शैषिको बलको नाम लोहिताक्षश्च शूलधृक्।।

**क्रि. ५ . १४८, १४९**

[ अत्र स्वातिजः कार्तिके मासि, पीताम्बरधरो वीरः कृष्णसाररथध्वजः इत्यधिकम्।]

### ४.२८.५९ कुबेरस्य लक्षणम्

**खि. १५ . ३२ - ३५**

इन्द्रनीलनिभो वीरः पीताम्बरधरो युवा।
कार्यः कुबेरो यक्षेशः -----------।।

मकुटः पार्श्वको नाग आयुधं दण्ड उच्यते ।
हंसयुक्तो रथस्तस्य वाहनं परिकीर्तितम्।।

देवी यवनला प्रोक्ता सैव ऋद्धिः प्रकीर्तिता।
दमनः पूजकः प्रोक्तः कपिलश्चाङ्घ्रिपूजकः।।

दमनश्चाग्निवर्णः स्यात् कपिलः सोमवर्णभाक् ।
श्यामस्तु धनिनः शेषो वर्णतः श्याम एव सः।।

**स.२१ . २८**

[ अत्र त्रिपाद इत्यधिकम्। ]

**क्रि. ५ . १४९, १५०**

[अत्र त्रिपादः, कार्तिके श्रविष्ठाजः , रक्ताम्बरधरः, उदीच्यां दक्षिणामुखः इति च अधिकम्। ]

### ४.२८.६० ईशानस्य लक्षणम्

**खि. १५ . ३६ - ३८**

पाटलीकुसुमाभस्तु शिवो वृषभवाहनः।
त्रिणेत्रस्तु ध्वजश्चोक्षाः पत्नी रतिजया मता ।।

कुण्डाक्षस्य सुता रम्या इन्दीवरनिभा शुभा।
दादीभको नाम मुनिः पूजकः श्वेत उच्यते।।

शैषिको यमजिन्नाम स तु वै पद्मसन्निभः।
शूलं च परशुं तस्य आयुधं परिकल्पयेत्।।

**स. २१ . २९**

**क्रि. ५ . १५१, १५२**

[अत्र आर्द्रायां मार्गशीर्षे जातः, चर्मधृत् इति च अधिकम्। ]

**४.२८.६१ इन्द्रादिपरिवाराणां बिम्बकल्पने पक्षान्तरम्**

**स. २१ . २४ , २५**

इन्द्रादिपरिवाराणां गरुडस्य तथैव च ।।

हीनेऽपि कौतुके बिम्बे ध्रुवबेरं तु कारयेत्।

**४.२८.६२ परिवारदेवानां विखनोमुनिप्रभृतीनां स्थापनस्थानम्**

**स. २१ . ३३**

ईशानोदानयोर्मध्ये शान्तवद्विखनोमुनिम्।
मरीचिं काश्यपं चैव भृगुमत्रिं तथैव च ।।

**४.२८.६३ प्रथमद्वितीयावरणयोः इन्द्रादिबलिदेवार्चनम्**

**वि. २० . ११९**

प्रथमावरणे, द्वितीये वा,पूर्ववदिन्द्रादीनर्चयेत्। प्रागादिद्वारदक्षिणपार्श्वे तत्तद्दिगीशानर्चयेत्।

**४.२८.६४ बलिपीठस्य त्रैविध्यमुत्तमादिभेदेन**

**प्र. ६ . ४३**

गर्भेष्टांशोच्छ्रयं श्रेष्ठं सप्तभागे द्विमध्यमम्।
पञ्चभागैकमधमं बलिपीठं तथा भवेत्।।

**क्रि. ५ . २७६ - २७९, २९०, २९१**

बलिपीठं प्रवक्ष्यामि उत्तमाधममध्यमम्।
पद्मश्रीकुम्भबन्धाख्याश्चतुरश्राष्टवृत्तकाः।।

उपपीठादिकं सर्वं प्रासादविधिवच्चरेत्।
अधिष्ठानोदयं धाम्नः बलिपीठस्य विस्तरम्।।

उत्तमं तत्प्रमाणं स्यात् तदर्धं मध्यमं भवेत्।
तदर्धमधमं प्रोक्तं विस्तारं पादबाह्यतः।।

तद्विस्तारसमोत्सेधं पादाधिकमथापि वा।
अर्धाधिकं वा कुर्वीत विमानस्यानुरूपतः।।

------------------------------

गोपुरात् पुरतः कुर्यात् मध्यसूत्रस्थितं यथा।।

(अधिष्ठानतलोत्तुङ्गं बलिपीठं न कल्पयेत्।)

**४.२८.६५ उत्तमबलिपीठस्य लक्षणम्**

**क्रि. ५ . २८० - २८३**

द्वात्रिंशांशोत्तमोत्सेधं द्व्यंशकं पादुकं भवेत्।
सप्तांशा जगती प्रोक्ता षड्भागं कुम्भमेव च ।।

एकांशमूर्ध्वपट्टी स्यात् पञ्चभागं दलं भवेत्।
द्व्यंशके कर्णकम्पे च महापट्टी च अंशकम्।।

एकांशं चोर्ध्वपट्टी स्यात् वेदांशं लम्बपङ्कजम्।
द्व्यंशकं चोर्ध्वपद्मं स्यात् चतुर्द्वारं चतुर्मुखम्।।

एतादृशैरलङ्कारैर्युक्तमुत्तममुच्यते।

### ४.२८.६६ मध्यमबलिपीठस्य लक्षणम्

**क्रि. ५ . २८३ - २८७**

मध्यमे च तदुत्सेधे षड्विंशद्भागभाजिते।।

द्व्यंशकं पादुकं चैव षड्भागं जगतीं विदुः।
पञ्चांशं कुमुदं विद्यादेकांशं पट्टिका भवेत्।।

कर्णं चैव चतुर्भागमेकभागं तु पट्टिका।
महापट्टी द्विभागं स्यादेकांशं चोर्ध्वपट्टिका।।

द्विभागं स्यादेकपट्टी द्विभागं लम्बपद्मकम्।
द्व्यंशकं लम्बपद्मं तु पद्ममूर्ध्वं तु द्व्यंशकम्।।

एवं प्रमाणसंयुक्तं मध्यमं पीठमुच्यते।

### ४.२८.६७ अधमबलिपीठस्य लक्षणम्

**क्रि. ५ . २८७ - २९०**

अधमे तु तदुत्सेधं भागं विंशतिकं भवेत्।।

पादुकं चैकभागं तु जगती पञ्चभागिका।
कुमुदं तु प्रतिष्ठांशं पट्टिका भागमिष्यते।।

त्रिभागं कण्ठमित्युक्तमेकांशं चोर्ध्वपट्टिका।
महापट्टी द्विभागं स्यात् द्विभागं लम्बपद्मकम्।।

ऊर्ध्वपद्मं तथैकांशं कनिष्ठं पीठलक्षणम्।

### ४.२८.६८ पैशाचपीठस्य त्रैविध्यम् उत्तमादिभेदेन

**प्र. ६ . ४४ - ४९**

गर्भपञ्चत्रिभागैकं -------------।
नवांशे षट्चतुर्भागं मध्यमाधममुत्तमम्।।

त्रिधा पैशाचिकं पीठात् हस्तमात्रं क्रमाद् भवेत्।
द्विहस्तान्तं त्रिहस्तान्तं चतुर्हस्तान्तमुच्यते।।

अधमं मध्यमं श्रेष्ठं त्रिधा पैशाचपीठकम्।
सप्तविंशतिभागैश्च सममेवं समुन्नतम्।।

द्व्यंशं च पादुका ज्ञेयं चतुरंशं जनिं विदुः।
त्र्यंशं तु कुम्भमित्याहुश्चतुर्थं कण्ठमेव च ।।

षड्भागं करणेत्याहुः द्व्यंशं वलकमेव च ।
चतुरंशे कपोताश्चांशे चैवाग्रपट्टिका।।

अध्यर्धं पद्मपुष्पं त्वेकार्धं पद्मपुष्पकम्।
एवं सम्यग्विदित्वा तु भागे भागे विनिर्दिशेत्।।

**४.२८.६९ आदित्यस्य लक्षणम्**

**वि. २० . १२०**

द्वितीयावरणे प्राग्द्वारादुत्तरे पश्चिमाभिमुखो रक्तवर्णः शुक्लाम्बरधरो द्विभुजः पद्महस्तः सप्ताश्ववाहनो हयध्वजो रेणुकासुवर्चलापतिः खकार-बीजोऽब्धिघोषणरवः सहस्रकिरणो मण्डलावृतमौलिः श्रावणे मासि हस्तजः आदित्यः।

**स. २१ . २९**

**खि. १५ . ३९ - ५१**

रुद्रस्यैवापरा मूर्तिस्त्रिणेत्रो मकुटी तथा।
बिम्बं मार्ताण्डस्य कुर्यात् पृष्ठे मण्डलसंयुतम्।।

चतुष्पादं कारयेच्च द्विपादमथवा रविम्।
दोर्भिर्द्वादशभिर्युक्तं व्याघ्रचर्माम्बरं तथा।।

शुक्लाम्बरधरं चापि देवेशं रुक्मलोचनम्।
आसीनं वा स्थितं वापि विधिवत् स्वस्तिकासने।।

यज्ञोपवीतिनं कुर्यात्सप्ताश्वैः सुदृढैः पुनः।
आयुधैरपि संयुक्तं गदापाशादिशक्तिभिः।।

उल्लोलयन्तं विशिखं स्थाने चेत्सर्वमाचरेत्।
दृष्टिं सानुग्रहं कुर्याद्दत्ताभयकरं पुनः।।

पत्नी सुवर्चला नाम रेणुकेति च यां विदुः।
शैषिकस्त्वमितः प्रोक्तो भास्करस्याग्निसन्निभः।।

मुनिः कनकमाली स्याद् बलिजिच्च विचक्षणः।
वैखानसो मुनिर्धीमान् स्वर्णमाली प्रकीर्तितः।।

बलिजित् वालखिल्यश्च तावुभौ च सितासितौ।
बडबा वाहनं तस्य विश्वरंहेति कीर्तितः।।

सर्वान् केतूंस्तथा कुर्यात्प्रमाणं शुकवर्णिनः।
शुकनासाखुरानश्वान् रुक्मकेशान्तलोचनान्।।

देवी निजगपत्राङ्गा पिङ्गला बडबा मता।
अरुणं वाहनस्थाने कपिलं रुक्मकेशकम्।।

सर्वाभरणसंयुक्तं पादौ --------------।
उत्पत्त्यादिकमन्यच्च मया[1] प्रोक्तं प्रकीर्णके।।

न लौहं कांस्यकं कार्यं तत्पात्रं परिवर्जयेत्।
स्निग्धं कुसुम्भवर्णं च कृत्वा मार्ताण्डमर्चयेत्।।

---

1 भृगुणेत्यर्थः।

ध्वजे च शरभं कुर्यात् पृष्ठपादं बलान्वितम्।
नवतालायतो ------- न्यग्रोधपरिमण्डलः।।

**क्रि. ५ . १५२ - १५४**

मार्ताण्डः पद्महस्तश्च पृष्ठे मण्डलसंयुतः।।

चतुष्पादो द्विपादो वा पलाशकुसुमप्रभः।
श्रावणे हस्तजो देव्यौ रेणुका च सुवर्चला।।

सप्तसप्तिसमायुक्तो रथो वाहनमुच्यते।
अनूरुस्सारथिस्सर्पो ध्वजस्तुरग एव वा।।

## ४.२८.७० चन्द्रस्य लक्षणम्

**वि. २० . १२०**

तद्दिगीशस्य दक्षिणे पश्चिमाभिमुखः श्वेताभो रक्ताम्बरधरो द्विभुज इक्षुचापभृत् मण्डलावृतमौलिः हिरण्मयोऽष्टाश्ववाहनः कुलीरध्वजो हंसरवो रोहिणीशः सकारबीजः सौम्यजश्चन्द्रः।

**खि. १५ . ८५ - ९७**

आत्रेयं हरिवत् कुर्याच्छ्रितं मण्डलमाचरेत्।।

मिश्ररुक्मनिभं श्वेतमिश्रमाहितकं स्मृतम्(?)।
राजानं द्विभुजं कुर्यादिन्द्रमौलिसमन्वितम्।।

तारां च रोहिणीं कुर्याद्दक्षिणे चास्य चासने।
वामे च फल्गुनीं कुर्यात् पद्माभूमी यथाहरेः।।

इषुधी चाक्षये तस्य चक्रस्थानेऽभिपूजयेत्।
अश्वा हिरण्यरोमाणः श्वेताश्चाष्टौ प्रकीर्तिताः।।

प्रवालपादनासास्ते शुकपिञ्छखुरा वराः।
शशाकृतिस्तस्य चोर्ध्वे दक्षिणे सूत्रशीर्षतः।।

लक्ष्मभागसमायामकिणं वामे तथोपरि।
पुरुषोक्तं तु सर्वाङ्गं द्विभुजं पीनबाहुकम्।।

शुभसंहननं कुर्यात् सोमं नित्यं मुदाऽन्वितम्।
तारार्थं युध्यमानं तु देवेन्द्रेणानुयायिना।।

प्राहरत् किल तं युद्धे शूलेन वृषवाहनः।
जहाराच्छिद्य तं शूलं मध्ये प्राप तु लक्षणम्।।

तदाप्रभृति सोमस्य किणं शिरसि दक्षिणे।
अपलायनमिच्छेच्चेदर्चयेदिन्दुमुत्तमम्।।

रथस्तु वाहनं नाम स्वयं द्रुहिणनिर्मितम्।
स्थापयेत्तं खगस्थाने तस्य चेदालयः कृतः।।

अश्वान् समर्पयेत्तत्र मन्त्रैरेतैरुदाहृतैः।
सुखं च जयदं शक्तिं विशोकं युद्धपारगम्।।

हृष्टं सम्राजमानन्दमष्टौ सम्पूजयेद्धयान्।
विमलं पुष्यकं चैव मुनी तौ पूजने स्मृतौ।।
सितं श्यामाम्बरं कुर्याद्विमलं पुण्यगर्भितम्।
अमलः पुष्यको ज्ञेयस्सोम उक्तः समासतः।।

**क्रि. ५ . १८२, १८३**

[अत्र चैत्रे मृगशिरोजातम् इत्यधिकम्। ]

## ४.२८.७१ अङ्गारकस्य लक्षणम्

**वि. २० . १२०**

दक्षिणे च उत्तराभिमुखो बन्धूकवर्णो नीलाम्बरधरश्शक्तिपाणिः शरभध्वजश्शुकजुष्टापतिः अश्विनीजातः अश्ववाहनश्शङ्खरवो नामाद्यक्षरबीजः अङ्गारकः।

**खि. १५ . ७५, ७६**

शक्तिपाणिस्तथा भौमो वक्रश्शैषिक उच्यते।
रक्तः पत्नी शुकजुषा वाहनं चाश्व इष्यते।।
श्वेतश्च कृष्णफालश्च कृष्णवालः प्रकीर्तितः।

**क्रि. ५ . १७३, १७४**

शक्तिपाणिस्तथा भौमः कदम्बकुसुमप्रभः।
देवी च कुमुदा तस्य वराहो वाहनं तथा।।
पूर्वाषाढासमुद्भूतो ज्येष्ठमासे कुजस्तथा।

## ४.२८.७२ बुधस्य लक्षणम्

**वि. २० . १२०**

तस्य पश्चिमे च उत्तराभिमुखश्श्यामवर्णो रक्ताम्बरधरो द्विभुजो रथवाहनः सिंहध्वजश्शङ्खरवो नामाद्यक्षरबीजस्सुशीलापतिः श्रविष्ठाजातो बुधः।

**खि. १५ . ७९ , ८०**

तारेयं विष्णुवर्णाङ्गमिलां देवीं समाचरेत्।।
शेषो वसिष्ठको नाम कङ्को वाहनमुच्यते।
ध्वजः श्येनः समाख्यातो रवेर्दक्षिणबाहुकः।।

**क्रि. ५ .१७७, १७८**

बुधं सस्यनिभं कुर्याच्छरबाणासनान्वितम्।।

बुद्धादेवीसमायुक्तं वामदेवाश्ववाहनम्।
श्रावणे च श्रविष्ठाजं दर्पणं ध्वजमेव च ।।

### ४.२८.७३ बृहस्पतेः लक्षणम्

**वि. २० . १२१**

पश्चिमे दिगीशस्य दक्षिणे प्राङ्मुखः पीताभः श्यामाम्बरधरो दर्भहस्तः पूरितमकुटः कृष्णाजिनधरः कुशध्वजो हंसवाहनः तिष्यजस्तारापतिः नामाद्यक्षरबीजः बृहस्पतिः।

**खि . १५ . ७७ - ७९**

कुर्याद् बृहस्पतिं देवं मकुटं पुरिमै(?) र्युतम्।।

कदलीवनमध्यस्थं तारया प्रियया युतम्।
पुष्पश्यामाम्बरो धीमान् भक्तस्तस्यापि पीवरः।।

हंसस्तु वाहनं ज्ञेयं ध्वजो नित्यं कुशः स्मृतः।

**क्रि. ५ . १७६, १७७**

[ अत्र पीतं, आषाढे तिष्यसम्भूतमित्यधिकम्। ]

### ४.२८.७४ शुक्रस्य लक्षणम्

**वि. २० . १२१**

तस्योत्तरे प्राङ्मुखो रजतवर्णो वल्कलाम्बरधरोऽजिनजटाधरो मेघवाहनः स्रुवध्वजो रोहिणीजो नामाद्यक्षरबीजस्सुमदापतिः शङ्खरवः शुक्रः।

**क्रि. ५ . १७९**

[ अत्र जयन्तीशः, माघमासे भाग्यज इति विशेषः। ]

**खि. १५ . ८१, ८२**

काव्यो धिषणतुल्यः स्याज्जायाऽस्य सुमता मता।
मेघाश्च वाहनं तस्य येऽग्निजा इति कीर्तिताः।।

शेषस्तु सुमदो नाम चिह्नमग्निरुदाहृतः।

### ४.२८.७५ शनैश्चरस्य लक्षणम्

**वि. २० . १२१**

उत्तरे दिगीशस्य पश्चिमे दक्षिणामुखः अञ्जनाभः द्विभुजः कुशचीराम्बरधरो रेवतीजः कुमुदापतिर्वराहध्वजवाहनः शङ्खरवो नामाद्यक्षरबीजो मन्दः।

**खि. १५ . ७६, ७७**

कुर्याच्छनिमसिश्यामं शेषपृष्ठे विचक्षणः।।

देवीं च कुमुदां नाम वराहं वाहनं तथा।

**क्रि. ५ . १७४, १७५**

सौरिं कृष्णनिभं कुर्यात् कुशचीराम्बरं तथा।।

माघमासे तु रेवत्यां जातं नीलोत्पलध्वजम्।
स्यन्दनं वाहनं तस्य वराहोरगसंयुतम्।।

### ४.२८.७६ राहोर्लक्षणम्

**वि. २० . १२१**

तत्प्राच्यां दक्षिणामुखः श्यामाभो जपाम्बरधरो द्विभुजो नागचूलिकमस्तकः पाशायुधो मण्डलावृतमौलिः सर्पध्वजवाहनो आश्लेषाजो जरापतिः नामाद्यक्षरबीजः राहुः।

### ४.२८.७७ केतोर्लक्षणम्

**वि. २० . १२२**

प्राच्यां पश्चिमाभिमुखो धूमवर्णः श्वेताम्बरधरो नारीशः, अन्यत् सर्वं राहोरिव केतुः।

### ४.२८.७८ गङ्गाया लक्षणम्

**वि. २० . १२२**

तृतीयावरणे प्राग्द्वारदक्षिणे पश्चिमाभिमुखा द्विभुजा पीताम्बरधरा श्वेताभा कृष्णकुञ्चितमूर्धजा हृदये अञ्जलिसंयुक्ता रेवतीजा गकारबीजा कूर्मध्वजवाहना शङ्खरवा गङ्गा।

**क्रि. ५ . १८०, १८१**

जाह्नवीं श्वेतरक्ताभां पीतवस्त्रां तथैव च ।
विभज्यैकदलं हस्तेनाऽऽघ्रायन्तीं तदम्बुजम्।।

आश्वयुङ्मासि रेवत्यां जातां तां लोहितध्वजाम्।
सर्वाभरणसंयुक्तां गङ्गां कुर्याद्विचक्षणः।।

**खि. १५ . ८२ - ८५**

सर्वाभरणसंयुक्तां गङ्गां कुर्याद्विचक्षणः।।
पीठे कूर्माकृतौ देवीं पद्महस्तां तथाऽसने।
धृतं चैककरे पद्ममाजिघ्रन्तीं समाचरेत्।।

प्रसारितासनं कुर्यात्तस्या न स्थानमिष्यते।
शाकुरिः शैषिकस्तस्या वाहनं हंस इष्यते।।

स्त्रीणां ध्वजस्तु हंसः स्यात् कलिपत्नीपतेः सदा।

### ४.२८.७९ यमुनाया लक्षणम्

**वि. २०. १२२**

दक्षिणे चोत्तरामुखा श्यामवर्णा रक्तवस्त्रधरा पीनस्तनी कृष्णकुञ्चितमूर्धजा द्विभुजा पुष्पहस्ता परपुष्टरवा मत्स्यवाहनकेतुका मूलजा यमाद्यक्षरबीजा यमुना।

### ४.२८.८० नर्मदाया लक्षणम्

**वि. २० . १२२**

पश्चिमे रक्ताभा प्राङ्मुखा श्वेतवस्त्रधरा सुखासीना द्विभुजा पुष्पमालाधरा कूर्मध्वजवाहना जलजकुक्कुटरवा अश्विनीजाता नद्याद्यक्षरबीजा नर्मदा।

### ४.२८.८१ सिन्धो लक्षणम्

**वि. २० . १२२,१२३**

उत्तरे दक्षिणामुखा कृष्णश्वेताभा पुष्पवस्त्रधरा पद्महस्ता द्विभुजा उद्बुद्धकेशी पौष्णजा जलघोषरवा मकरध्वजवाहना सिताद्यक्षरबीजा सिन्धुः।

### ४.२८.८२ दुर्गाया लक्षणम्

**वि. २० . १२३**

प्राग्द्वारादुत्तरे श्यामवर्णा सिताम्बरधरा अष्टभुजा चतुर्भुजा वा शङ्खचक्रधरा सर्वाभरणसंयुक्ता कक्ष्याबद्धघनस्तनी कृत्तिकोद्भवा घण्टारवा नामाद्यक्षरबीजा सिंहध्वजवाहना दुर्गा।

### ४.२८.८३ सरस्वत्या लक्षणम्

**वि. २० . १२३**

आग्नेय्यां रक्तवर्णा श्वेतवस्त्रधरा चतुर्भुजा अक्षमाला कमण्डलुज्ञानमुद्रापुस्तकयुता हंसवाहना नामाद्यक्षरबीजा अश्विनीजाता प्रणवरवा सिद्धिः।

**खि. १५ . १५५ - १५९**

विद्यां चतुर्भुजां कुर्याद्रक्तां धृतकुशेशयाम्।
दक्षिणे त्वक्षमालां च करे वामे कमण्डलुम्।।

ज्ञानमुद्रां दक्षिणाधः करे वामे च पुस्तकम्।
एकं प्रसारिणं कुर्यात् सुरूपां शैषिकीं तथा।।

पुष्करा च विशोका च व्याजिन्यौ परिकीर्तितौ।
पुष्कराऽङ्कुशसङ्काशा विशोका दुग्धवर्णिनी।।

विश्वपाद्गालवौ चैव पूजकौ तु मुनीश्वरौ।
विश्वपादञ्जनाभस्तु भाभो गालव उच्यते।।

उग्रं भीमं महाभूतं विकटं दण्डपाणिनम्।
कालाम्बुदाभं कृत्वा तु तलके स्थापयेदिति।।

### ४.२८.८४ सावित्र्या लक्षणम्

**क्रि. ५ . २२५ - २२७**

सावित्रीं ध्वजिनीं चापि श्वेतवस्त्रां सुसंस्थिताम्।
विद्यां चतुर्भुजां कुर्यात् रक्तामृतकुशेशयाम्।।

दक्षिणे त्वक्षमालां च करे वामे कमण्डलुम्।
ज्ञानमुद्रां दक्षिणेऽथ करे वामेऽथ पुस्तकम्।।

तैष्ये पुनर्वसूद्भूता तत्र पूज्याधिकेन सा।

### ४.२८.८५ श्रीदेव्या लक्षणम्

**खि. १५ . ९८ - १००**

पद्मपीठे समासीनां मण्डले चोर्ध्वकर्णिके।

तथा प्रसारितकरां देवीं धृतकुशेशयाम्।।

शातकुम्भमयैः कुम्भैः सिच्यमानां दिशां गजैः।
अथवा शयनारूढां क्रीडन्तीं सह विष्णुना।।

मानोक्तेन[1] तु मानेन श्रीदेवीं[2] कारयेत् सुधीः।

**क्रि. ५ . १८४ , १८५**

**वि. २० . १२३**
[ अत्र नैर्ऋत्यामिति अधिकम्। ]

**४.२८.८६ ज्येष्ठाया लक्षणम्**

**खि. १५ . १०८ - ११८**
त्रिपीठकाख्ये पीठे तु ज्येष्ठां कुर्याद्विचक्षणः।
प्रसारासनगां स्थाने दैविके मानुषे चरेत्।।

वामहस्तेन सम्पूर्णं हरन्तीं निधिभाजनम्।
दक्षिणं पुष्पहस्तं च किञ्चिल्लम्बोदरीं शुभाम्।।

सरक्तपुष्पवस्त्रान्तामतिपीनचलस्तनीम्।
तस्याश्च दक्षिणे पुत्रं तस्या बाहुप्रमाणतः।।

पीतं वृषभकं नाम शुकवर्णहिताम्बरम्।
सहासने ततस्तस्या दण्डपाणिं समुन्नतम्।।

वृषभस्य शिरस्तस्य पूर्वोक्तं किञ्चिदुन्नतम्।
वामे च मैञ्जलिं तस्यास्सुतां परमलालिताम्।।

अर्धसाचीकृतापाङ्गामर्धासनसमाहिताम्।

1 मानाधिकारोक्तेन।
2 भगवतः पार्श्वद्वये विराजमानयोः श्रीदेवीभूदेव्योरन्यतरा या श्रीदेवी -ततोऽन्येयं पृथगालये प्रतिष्ठाप्य अर्चनीया इति भाति।

रक्तनीलपरीताङ्गीं रक्तोत्पलकरां पराम्।।

पादमेकं प्रसार्यैकमाकुञ्च्य परिकल्पयेत्।
तेषां पृष्ठे तथा कुर्याद् व्याजिन्यौ दक्षिणे क्रमात्।।

सारोचितां सरुचिरां कुर्यात् स्थाने यथाक्रमम्।
पृथक् चेदालयं तस्या वाहनं खरयुग्रथः।।

खराणां चैव पञ्चाशत् रथे तस्याः प्रकीर्तिताः।
कृष्णः काको ध्वजो ज्ञेयो नितम्बा चैव शैषिकी।।

परिवारः खरास्तस्याः षोडश स्युर्दुरासदाः।
आलेख्यास्ते क्लृप्तबिम्बास्सर्वलोकस्य नाशकाः।।

पिशाचसमकायास्ते नित्यं चाभोज्यभोजनाः।

**क्रि. ५ . १८९ , १९०**

[अत्र कपालवामहस्तां च रक्तकुञ्चितमूर्धजाम्।।

उष्ट्रपीठे समासीनां अट्टहाससमन्विताम्।
चैत्रे याम्यर्क्षसञ्जाताम् उल्काध्वजसमन्विताम्।। इत्यधिकम्। ]

**वि. २० . १२३**

वायव्यां रक्ताभा पुष्पाम्बरधरा पीनस्तनी पुष्पनिधिभाजनधरा दक्षिणे पीतगदाधरा, वृष(भ)युता वा रक्तनीलपरीताङ्गी मौञ्जलिकाञ्चियुता ज्येष्ठानक्षत्रजाता खरयुक्ता श्यामाम्बरधरा। रथवाहना काकध्वनियुता काकध्वजा नामाद्यक्षरबीजा ज्येष्ठा।

### ४.२८.८७ निद्राया लक्षणम्

**खि. १५ . ११९ - १३०**

निद्राया लक्षणं वक्ष्ये तां कुर्यादष्टबाहुकाम्।

शङ्खचक्रधरां स्थाने आकुञ्चितपदांस्तथा।।

शूलासिचापसहितां गदापाशादिधारिणीम्।
शुकं सुरुचिरे स्थाने स्थितमादाय वामगम्।।

तनुकां पद्मके पीठे स्थापयेदिति शासनम्।
माहिषे तु शिरस्येव तां देवीं स्थापयेत् क्रमात्।।

रम्यां सुलोचनापाङ्गां कृष्णकुञ्चितमूर्धजाम्।
तन्वीं च कुचभारोग्रां सूक्ष्मकर्णां त्रिलोचनाम्।।

काम्याभरणसर्वाङ्गीं दृष्टकन्यासुवेषगाम्।
लतावलयसम्बद्धां झल्लरीभिः सुसंवृताम्।।

कौबेरमौलिसंयुक्तामतिसुन्दरगात्रकाम्।
तस्याः पृष्ठे समे पार्श्वे विशल्यां विरुजांस्तथा।।

व्याजिन्यौ ते तथा कुर्यात् कुन्दबन्धूकसंनिभे।
ख्यातीशपुण्ययोः स्थाने सुमनामञ्जनांस्तथा।।

तस्याश्च कौशिकी नाम शैषिकी परिकीर्तिता।
कौशिकी श्वेतवर्णा स्यात् सुमना पीतका तथा।।

अञ्जनाञ्जनसङ्काशा सुशोभाः साक्षमालिकाः।
वहने वाहनं तस्याः सिंहः कृष्णमृगस्तथा।।

सिंहः प्रभञ्जनो नाम कृष्णः सार उदाहृतः।
दक्षिणोत्तरयोस्तस्या विन्यसेदिति शासनम्।।

ध्वजश्चास्याः समाख्यातः स्वस्तिकः सिंहलक्षणः।

नीलोत्पलदलो नाम भूतग्राही च वीजकः।।

भूतः पङ्गुपदो नाम रुक्मवर्णोऽरुणेक्षणः।

## ४.२८.८८ परिवारदेवताया धात्र्या लक्षणम्

### खि. १५ . १०४ - १०७

कुर्याद्धात्रीं महारौद्रीं दंष्ट्राभ्यां समलङ्कृताम्।।

बालमौल्युत्तरासङ्गां सान्त्रशूलां च षड्भुजाम्।

रक्तोग्रनयनापाङ्गीं भ्रूभङ्गविकटोग्रकाम्।।

स्त्रीणामिव च तद्वक्त्रमतिरौद्रं समाचरेत्।

कपालपाशहस्तां च रक्तकुञ्चितमूर्धजाम्।।

उग्रपीठे समासीनामट्टहाससमन्विताम्।

बेरं कुर्याद्यथायोग्यं तस्याश्चेदालयं पृथक्।।

### क्रि. ५ . १८७ - १८९

### वि. २० . १२४

ऐशान्यां रक्ताभा श्यामाम्बरधरा उग्रनयना महारौद्री दंष्ट्राभ्यामलङ्कृता बालमौल्युत्तरासङ्गा त्रिशूला षड्भुजा भ्रूभङ्गविकटा कपालपाशहस्ता रक्तकुञ्चितमूर्धजा अट्टहाससहिता अवग्रपीठसमासीना डमरुकध्वनियुता नामाद्यक्षरबीजा पिशाचध्वजवाहना आर्द्रानक्षत्रजाता धात्री।

## ४.२८.८९ सुराया लक्षणम्

### वि. २० . १२४

अन्तराले प्राच्यां पश्चिमाभिमुखा रक्तवर्णा जपाम्बरधरा पुष्पहस्ता ललाटोपरिपुष्पचूडा कृष्णकुञ्चितमूर्धजा वीणावेणुरवा स्वात्युद्भवा कपोतध्वजवाहना सुराद्यक्षरबीजा सुरा।

## ४.२८.९० सुन्दर्या लक्षणम्

### वि. २०. १२४

तद्दक्षिणे[1] पश्चिमाभिमुखा कनकाभा सिताम्बरधरा पुष्पहस्ता द्विभुजा कृष्णकुञ्चितमूर्धजा वीणावेणुरवा स्वात्युद्भवा हंसध्वजवाहना नामाद्यक्षरबीजा सुन्दरी।

## ४.२८.९१ स्वाहाया लक्षणम्

### वि. २० . १२४

दक्षिणे च उत्तराभिमुखा रुक्माभा रक्तवस्त्रधरा पुष्पहस्ता द्विभुजा कृष्णकुञ्चितमूर्धजा हंसरवा विशाखाजाता नामाद्यक्षरबीजा स्वाहा।

## ४.२८.९२ स्वधाया लक्षणम्

### वि. २० . १२५

तत्पश्चिमे[2] च उत्तराभिमुखा सितश्यामा कृष्णाम्बरधरा पुष्पहस्ता द्विभुजा कृष्णकुञ्चितमूर्धजा शुकध्वजवाहना नामाद्यक्षरबीजा अग्निरवा याम्यजा स्वधा।

## ४.२८.९३ संह्लादिन्या लक्षणम्

### वि. २० . १२५

पश्चिमे प्राङ्मुखा कनकाभा सिताम्बरधरा पुष्पहस्ता द्विभुजा कृष्णकुञ्चितमूर्धजा वीणावेणुरवा हंसध्वजवाहना मूलोद्भवा नामाद्यक्षरबीजा संह्लादिनी।

## ४.२८.९४ राकाया लक्षणम्

### वि. २० . १२५

उत्तरे दक्षिणाभिमुखा हेममिश्रसिताभा रक्ताम्बरधरा पुष्पहस्ता द्विभुजा

---

1 सुरायाः दक्षिणे ।    2 स्वाहायाः पश्चिमे।

कृष्णकुञ्चितमूर्धजा वीणावेणुरवा हंसध्वजवाहना मूलोद्भवा नामाद्यक्षर-बीजा अभिजिज्जाता राका।

### ४.२८.९५ सिनीवाल्या लक्षणम्

**वि. २० . १२५**

तत्पूर्वे[1] दक्षिणाभिमुखा सितश्यामा शमीपुष्पनिभाम्बरधरा पुष्पहस्ता द्विभुजा कृष्णकुञ्चितमूर्धजा घनस्तनी पृथुश्रोणी हंसध्वजवाहना शुकस्वररवा अभिजिज्जाता पुण्याद्यक्षरबीजा सिनीवाली।

### ४.२८.९६ हवीरक्षकस्य लक्षणम्

**वि. २० . १२६**

पचनालये च उत्तराभिमुखः कृष्णवर्णः शुक्लाम्बरधरो विकटकञ्चूः शूलपाणिः कुशेशयाक्षो नामाद्यक्षरबीजः सुरगणेशः शङ्खरवोऽश्ववाहनः सिंहध्वजो रोहिणीजो हवीरक्षको।

**क्रि. ५ . १३८, १३९**

[ अत्र विद्युत्पतिः, रोहिण्यां मार्गशीर्षे जातः रक्ताम्बरः इति विशेषः।]

### ४.२८.९७ पुष्परक्षकस्य लक्षणम्

**वि. २० . १२६**

पुष्पसञ्चयस्थाने पश्चिमाभिमुखः कनकवर्णः श्यामाम्बरंधरो गजवाहनः पुष्पध्वजो रेवतीजः शङ्खरवः शुद्धाङ्गीशो नामाद्यक्षरबीजः पुष्परक्षकः।

**क्रि. ५ . १३९ , १४०**

---

1 राकायाः पूर्वे।

पुष्पेशः पुष्पवत् श्यामस्तथापि नरवाहनः।।

पुष्पायुधो मीनकेतुः चैत्रेऽनूराधजस्तथा।

### ४.२८.९८ पुरुषस्य स्थानम्

**वि. २० . १२६**

स्नानोदकसञ्चयस्थाने पुरुषं पूर्ववत्[1] ।

### ४.२८.९९ प्लोताधिपस्य लक्षणम्

**वि. २० . १२६**

प्लोतवस्त्रोत्तरीयादिसञ्चयस्थाने हेमाभः शुकपिञ्छाम्बरधरः चतुर्भुजः कलशाक्षमालापाणिः जटाधरो हंसवाहनो रूपाद्यक्षरबीजः सावित्रीपतिः अभिजिज्जातः कमण्डलुध्वजो हुङ्काररवः त्वष्टा त्वष्टारं रूपजातं निधिजं प्लोताधिपमिति।

### ४.२८.१०० गदाया लक्षणम्

**वि. २० . १२६**

शयनस्थाने पश्चिमाभिमुखा हेमाभा रक्ताम्बरधरा पद्महस्ता द्विभुजा शिरसि गदाधरा सिंहध्वजवाहना घोररवा श्रविष्ठाजा गकारबीजा गदा।

### ४.२८.१०१ चामुण्डस्य लक्षणम्

**वि. २० . १२७**

हविर्द्रव्यादिसञ्चयस्थाने पश्चिमाभिमुखो मेघवर्णः श्वेताम्बरधरो विकटदण्डपाणिः भूतभावनः शूलध्वजो नामाद्यक्षरबीजः कुम्भशब्दरवः सर्वेशो आर्द्राजातः चामुण्डः।

---

1 प्रथमावरणवत् ।

### ४.२८.१०२ बलिरक्षकस्य लक्षणम्

**वि. २० . १२७**

होमस्थाने पश्चिमाभिमुखः श्यामवर्णः पीताम्बरधरो द्विभुजो दण्डायुधो रथवाहनः सिंहध्वजो नामाद्यक्षरबीजः शङ्खरवः श्रविष्ठाजः सुमनसांपतिः बलिरक्षकः।

**क्रि. ५ . १४० , १४१**

बलीशो बालिकेशोऽद्रिध्वजो दण्डी सितासितः।।

मृगेन्द्रवाहनश्चैत्रे सौम्यजो रक्तवस्त्रधृत्।

### ४.२८.१०३ गविष्ठस्य लक्षणम्

**खि. १५ . १४७, १४८, १५२**

गविष्ठं पद्मसङ्काशं कुर्याद्वै पीतवाससम्।।

सर्वाभरणसंयुक्तं मकुटं दैविकं तथा।

बेरं सुखासने कुर्याद् गविष्ठस्य परं क्रमात्.।

गविष्ठो दण्डपाणिः स्यादसिपाणिरपि स्मृतः।।

---

एकासनान्[1] कुञ्चितापसव्यपादान् समाचरेत्।।

**वि. २० . १२७**

चतुर्थावरणे प्राग्द्वारोत्तरे खड्गसङ्काशः पीतवासाः दण्डपाणिः खगध्वजो रथवाहनः सत्यलोचनापतिः श्रवणजो नामाद्यक्षरबीजो नाग(द)रवो गविष्ठः

**क्रि. ५ . २१५ - २१७**

गविष्ठो हि महाभूतः चेन्दीवरदलप्रभः।

1 पञ्चभूतदेवान् इत्यध्याह्रियते

मकुटी पीतवासाश्च सर्वाभरणसंयुतः।।

स सत्यलोचनेशश्च दण्डी कुम्भकवाहनः।
भेरुण्डकेतुः सम्प्रोक्तो मारुद्रवरसं(?) तथा।।

चैत्रे चित्रर्क्षसम्भूतो योषा स्यात् सत्यलोचना।

**४.२८.१०४ गविष्ठवाय्वग्निपत्नीनां प्रतिष्ठास्थानम्**

**खि. १५ . १५३, १५४**

गविष्ठपत्नी विख्याता विधिना सत्यलोचना।।

--------------------------------

त्रयाणामपि[1] देवीनां पृथक् स्थानं विधीयते।

**४.२८.१०५ पृथिव्या लक्षणम्**

**क्रि. ५ . २२३, २२४**

हरिणीं श्यामवर्णां तां श्वेतवस्त्रां किरीटिनीम्।।

पद्महस्तां क्षमां देवीं पद्मनेत्रां सुभूषिताम्।
वैशाखे रेवतीजातां महाचातकवाहिनीम्।

**वि. २० . १२७**

[ अत्र द्वारदक्षिणे हरिणीम् इति निर्दिश्यत इति विशेषः। ]

**खि. १५ . १५२**

सर्वेषां[2] वामतः कुर्यान्मेदिनीं वामलोचनाम्।
एकासनान्[3] कुञ्चितापसव्यपादान् समाचरेत्।।

**४.२८.१०६ गह्वरस्य लक्षणम्**

**खि. १५ . १५० - १५३**

------ तस्य [4] वामे कुर्यात्तु गह्वरम्।।

---

1 आकाशवाय्वग्नीनामित्यर्थः। 2 पञ्चभूतदेवानामित्यर्थः।
3 पञ्चभूतदेवान् इत्यध्याह्रियते 4 आभुरण्यस्य।

तृतीयप्रकृतिं कुर्याद् गह्वरं चोत्पलप्रभम्।
हरिपिञ्जरवस्त्रं तं भूतानां च चतुर्गुणम्।।

------------------------------

एकासनान्[1] कुञ्चितापसव्यपादान् समाचरेत्।।

आभुरण्यं गह्वरं च शक्तिपाणी समाचरेत्।

**वि. २० . १२७**

पश्चिमे प्राङ्मुख उत्पलाभः शुकपिञ्छाम्बरधरः पाशभृत् गजवाहनः सिंहध्वजः पकारबीजो दर्दुरशब्दः कनकाधिपतिस्तोयः।

**क्रि. ५ . २२१ , २२३**

तोयं चाञ्जनवर्णं च तथा वृषभवाहनम् ।
हरिपिञ्जरवासः स्यात् भूतमेतच्चतुर्गुणम्।।

तोयं नपुंसकं चेति मुनिः शातातपोऽब्रवीत्।
गलकाख्यं ध्वजं चैव तथोदग्ररवध्वनिः।।

ऊर्म्यायुतं तथाऽऽषाढे सौम्यनक्षत्रसम्भवम्।

### ४.२८.१०७ अग्नेः (पञ्चभूतेष्वन्यतमस्य) लक्षणम्

**वि. २० . १२८**

दक्षिणे च उत्तराभिमुखः पिङ्गलाभो नीलवासाः शक्तिभृत् गजवाहनः कपिलध्वजः संख्यापतिः शङ्खरवो नामाद्यक्षरबीजः अनलजोऽग्निः।

**क्रि. ५ . २१९ , २२०**

अग्निः सुवर्णवर्णोऽयमर्चिष्केशश्च शक्तिभृत्।
बडबावाहनश्चैव स्वाहेशो वानरध्वजः।।

प्रोष्ठपादेऽग्निभोद्भूतो नीलवस्त्रस्तथैव च ।

---

1 पञ्चभूतदेवानामित्यर्थः।

एषां[1] त्रयाणां देव्यश्च पृथक्स्थाने समाचरेत्।।

**खि. १५ . १५०, १५२, १५३**

आभुरण्यो नीलवासाः हरिपिञ्जरमूर्धजः।
तं कुर्यान्मध्यमे ---------------।।

---------------------------

एकासनान्[2] कुञ्चितापसव्यपादान् समाचरेत्।।
आभुरण्यं गह्वरं च शक्तिपाणी समाचरेत्।

## ४.२८.१०८ आभुरण्यस्य (अग्नेः) पत्न्याः सङ्ख्यकाया लक्षणम्

**खि. १५ . १५४**

----------- आभुरण्यस्य च सङ्ख्यका।
त्रयाणामपि[3] देवीनां पृथक् स्थानं विधीयते।।

## ४.२८.१०९ वायोर्लक्षणम्

**वि. २० . १२८**

उत्तरे दक्षिणाभिमुखः श्यामवर्णः पीतवासाः असिपाणिः गजवाहनो रेणुध्वजो यकारबीजश्चलिकापतिः स्वातीजः शङ्खरवो वायुः।

## ४.२८.११० वायुपत्न्याः चलिकायाः प्रतिष्ठास्थानम्

**खि. १५ . १५४**

वायोश्च चलिका नाम ------------।
त्रयाणामपि देवीनां पृथक् स्थानं विधीयते।।

**खि. १५ . १४९,१५२**

---

1 गविष्ठ (आकाश) वाय्वग्नीनाम् । 2 पञ्चभूतदेवान् इत्यध्याहियते। 3 पञ्चभूतदेवानामित्यर्थः।

श्यामस्तु पीतको वायुः पूर्वं कौसुम्भकाम्बरः।

-------------------------------------

एकासनान्[1] कुञ्चितापसव्यपादान् समाचरेत्।।

**क्रि. ५ . २१७, २१८, २२०**

वायुः श्यामोऽसिपाणिस्तु प्लवकाख्याहिवाहनः।।

शङ्खध्वजो हंसरवो माघे स्वातीदिनोद्भवः।

उदायिनीश्वरश्चैव पीतवस्त्र इति स्मृतः।

-------------------------------------

एषां[2] त्रयाणां देव्यश्च पृथक् स्थाने समाचरेत्।।

### ४.२८.१११ स्कन्दस्य लक्षणम्

**खि. १५ . १६० - १७०**

स्कन्दं पलाशपुष्पाभं षड्भुजं वा चतुर्भुजम्।
बालमौलिसमायुक्तं विकचप्रीतिवाचकम्।।

देवयानीं च तत्पार्श्वे स्थाने चेन्न समाचरेत्।
आसने दक्षिणे तेन चासित्वान्योन्यवीक्षणे।।

अर्धसाचीकृतं देव्याः तस्यार्धं भर्तुरिष्यते।
सर्वेषामपि देवानामासनं चैव दैविके ।।

देवी श्यामनिभा तस्य देवयानी वराङ्गना।
दुहिता सा हि धर्मस्य नित्यं धर्मपरायणा।।

तस्यालये तु विधिना सुसेनं स्थापयेत् क्रमात्।

---

1 पञ्चभूतदेवान् इत्यध्याहारः। 2 गविष्ठ (आकाश) वाय्वग्नीनाम्।

सुसेनोऽञ्जनवर्णः स्याच्छूलहस्तो गदायुधः।।

वाहनं हस्तिनं कुर्यान्मयूरं वा यथोचितम्।
नवहस्तमिभं कुर्यादुत्सेधः सप्तहस्तकः ।।

आयामार्धं ततः पादाः शेषं नाह उदाहृतः।
प्रदेश ----न्नतो विद्याच्छिरसो मस्तकं तयोः।।

नाहेनार्धपरीणाहः पादहीनं तु गात्रयोः।
गात्रार्धपरिणाहो वा पादहीनः करोर्ध्वकः।।

भूमिलम्बं तथा कुर्यात् करं वालमनुच्छ्रितम्।
मानं नखानां तत्रैव चतुरङ्गुलमिष्यते।।

भागान्तराणां तेषां वै सर्वं बोद्धव्यमित्यथ।
तयोर्मानं यथेभस्य मानं कुर्याद्भयङ्करम्।।

इभानामेव सर्वेषां मानमित्थमुदाहृतम्।
ऐरावतं विनाऽन्येषां नीलो वर्णः प्रकीर्तितः।।

**क्रि. ५ . २४३, २४४**

[ अत्र शक्तिधरः कुक्कुटकेतुक फाल्गुने इत्यधिकम्। ]

**वि. २० . १२९.**

तत्पश्चिमे[1] चोत्तराभिमुखः पलाशपुष्पाभः षड्भुजः षण्मुखः सर्वाभरणभूषितो बालमौलियुतो देवयानीपतिर्नामाद्यक्षरबीजः शङ्खरवो मयूरध्वजवाहनो गुहः।

1 काश्यपस्य पश्चिमे।

### ४.२८.११२ स्कन्दवाहनभूतस्य गजस्य लक्षणम्

**खि. १५ . १७१ - १७३**

स्याद्द्वादशकरायामो मितं करिपतेस्सदा।
सतालनवहस्तः स्यादुत्सेधस्सर्वसम्मतः।।

प्रवालाभश्चतुर्दन्तः श्वेतवर्णो गजाधिपः।
दन्ताश्च युग्मसंस्थानां युगलाः शोभना मताः।।

परिणाहादिकं तेषामूर्ध्वं युक्त्या समाचरेत्।

**क्रि. ५ . २४४ - २४९**

नवहस्तमितं कुर्यादुत्सेधं सप्तहस्तकम्।।

आयामार्धं ततः पादं शेषं नाहमुदाहृतम्।
प्रादेशिकं ततो विद्यात् शिरसोरस्कस्तयोः।।

नाहेनार्धपरीणाहं पादहीनं तु गात्रयोः(?)।
गात्रस्यार्धपरीणाहं पादहीनं करोर्ध्वगम्।।

तस्मात् त्रिभागादेव स्यात् कराग्रे नाह उच्यते।
भूमिलम्बं तथा कुर्यात् करस्याग्रमनुच्छ्रितम्।।

(मानं नखानां तस्यैव चतुरङ्गुलमिष्यते।)
गात्रान्तरेषु तेषां वै सर्वं बोद्धव्यमित्यतः।।

ऐरावतं विनान्येषां नीलवर्णमुदाहृतम्।

### ४.२८.११३ स्कन्दवाहनभूतस्य मयूरस्य लक्षणम्

**खि. १५ . १७७ - १७९**

पञ्चाक्षकाः समाख्यातास्सुन्दराः पञ्चवर्णकाः।

मयूरा ये प्रदृश्यन्ते तथा प्रकृतमानकाः।।
दिव्याश्चेदधिकं मानं देहानां च समाचरेत्।
हस्तं पादं तथायामत्रितयं तत्समं स्मृतम्।।
चूडा षडङ्गुलं प्रोक्तं विस्तारः कोलकं भवेत्।
गोलकोत्सेधसौन्दर्यं वीक्ष्य कुर्याद्विचक्षणः।।

**क्रि. ५ . २५६ - २५८**

**४.२८.११४ वाराहरूपविष्णोर्वाहनस्य नीलहस्तिनो मानम्**

**क्रि. ५ . २५२ - २५५**

तथा च नीलहस्ती स्यात् इन्द्रनीलप्रभः शुभः।।
वाराहस्य महाविष्णोः वाहनं परिकीर्त्यते।
पञ्चहस्तायतं पृष्ठे सकोलं चार्धदेहकम्।।
तस्यार्धमूर्ध्वे कर्णः स्यात् नाहं तस्य षडङ्गुलम्।
अग्रे भागपरीणाहः शिखा स्यात् अङ्गुलानि षट्।।
गोलकं विस्तृतं तस्य तुण्डं स्याच्चतुरङ्गुलम्।
भुजमात्रं तु पादं स्यात् भुजमात्रे तले उभे।।

**खि. १५ . १७३ - १७६**

**४.२८.११५ परिवारदेवस्य ऋग्वेदस्य लक्षणम्**

**वि. २० . १२८**

आग्नेय्यां पश्चिमाभिमुखः स्फटिकाभो रक्ताम्बरधरो द्विभुजः पुष्पहस्तः षड्तुध्वजवाहनो विद्येशो ऋताद्यक्षरबीजो याम्यजो ऋग्वेदः।

### ४.२८.११६ परिवारदेवस्य यजुर्वेदस्य लक्षणम्

**वि. २० . १२८**

नैर्ऋत्यां प्राङ्मुखः पीतवर्णः श्वेताम्बरधरः कुलिशहस्तो द्विभुजः कांस्यतालरवो अग्निकेतुः बुद्धीशः स्वरवाहनः इडाद्यक्षरबीजः पुनर्वसूजातो यजुर्वेदः।

### ४.२८.११७ परिवारदेवस्य सामवेदस्य लक्षणम्

**वि. २० . १२८**

वायव्यां प्राङ्मुखो रक्ताभः पीतवासाः द्विभुजः सप्तस्वरवाहनध्वजो मूलोद्भवो मतीशो गानरवः सामाद्यक्षरबीजः सामवेदः।

### ४.२८.११८ परिवारदेवस्य अथर्ववेदस्य लक्षणम्

**वि. २० . १२९**

ऐशान्यां पश्चिमाभिमुखः अञ्जनाभः श्वेतवस्त्रधरो द्विभुजः कूर्चहस्तः स्रुवध्वजो हंसवाहनो हंसरवः कलेशः प्रोष्ठपाज्जातो जपाद्यक्षरबीजः अथर्ववेदः।

### ४.२८.११९ शिवस्यार्चनस्थानम्

**वि. २०. १२९**

अन्तराले प्राच्यामुत्तरे शिवं पूर्ववत्।

### ४.२८.१२० परिवारदेवस्य विष्णोः लक्षणम्

**वि. २० . १२९**

तद्दक्षिणे[1] पश्चिमाभिमुखः सुवर्णः शुकपिञ्छाम्बरधरः श्रीपतिः खगध्वजवाहनश्चतुर्भुजः शङ्खचक्रधरः पाञ्चजन्यरवः श्रवणोद्भवः अजाद्यक्षरबीजो विष्णुः।

---

1 शिवस्य दक्षिणे

### ४.२८.१२१ काश्यपस्य लक्षणम्

**वि. २० . १२९**

दक्षिणे चोत्तराभिमुखः कृष्णवर्णः पुष्पवस्त्रधरो वेणुदण्डधरो द्विभुजः शङ्खरवस्त्रिपदावाहनः कमण्डलुध्वजो विश्वाद्यक्षरबीजो हस्तजः क्षमेशः काश्यपः।

### ४.२८.१२२ पङक्तीशस्य लक्षणम्

**वि.२० . १३०**

पश्चिमे दक्षिणभागे प्राङ्मुखः श्यामवर्णः सिताम्बरधरो द्विभुजः खड्ग खेटकसंयुक्तः किरीटी भूतध्वजवाहनो नन्दितापतिः उत्तरोद्भवो वराद्यक्षरबीजो वंशरवाः पङ्क्तीशः।

### ४.२८.१२३ पवित्रस्य लक्षणम्

**वि. २० . १३०**

उत्तरे प्राङ्मुखः अञ्जनाभः श्वेताम्बरधरो नपुंसको वृषभवाहनो गलकाध्वजः उग्ररवः ऊर्म्यायुधः सौम्यजः पराद्यक्षरबीजः पवित्रः।

### ४.२८.१२४ पावनस्य लक्षणम्

**वि. २० . १३०**

उत्तरे दक्षिणाभिमुखः पिङ्गाभः श्यामाम्बरधरः, अन्यत् सर्वं पवित्रवत्, पावनः।

### ४.२८.१२५ तक्षकस्य लक्षणम्

**वि. २० . १३०**

तत्पूर्वे[1] दक्षिणाभिमुखः श्यामवर्णः हेमाम्बरधरः पञ्चसप्तफणायुक्तो

1 पावनस्य पूर्वे।

जरापतिः हस्ततालरवःआश्लेषाजोऽजगरध्वजवाहनः तटाद्यक्षर-बीजस्तक्षकः।

**४.२८.१२६ कुह्वा लक्षणम्**

**वि. २० . १३१**

पञ्चमावरणे पूर्वद्वारोत्तरे पश्चिमाभिमुखा श्यामाभा पुष्पवस्त्रधरा पद्महस्ता द्विभुजा कृष्णकुञ्चितमूर्धजा शुकस्वररवा खगध्वजवाहना नामाद्यक्षरबीजा कूहूः।

**४.२८.१२७ अनुमतेर्लक्षणम्**

**वि. २० . १३१**

तद्दक्षिणे पश्चिमाभिमुखा सितश्यामा जपाम्बरधरा पुष्पहस्ता द्विभुजा खड्गध्वजवाहना शुकस्वररवा तताद्यक्षरबीजा अभिजिज्जाता अनुमतिः।

**४.२८.१२८ सर्वेश्वरस्य लक्षणम्**

**क्रि. ५ . २२७ , २२८**

सर्वेश्वरोऽम्बुवाहाभः षडङ्घ्रिध्वजवाहनः।।

श्वेतवस्त्रधरो दण्डी कुम्भशब्दरवस्तथा।
तैष्ये पुष्यभवः श्वेतवस्त्रश्चैवोष्ट्रवाहनः।।

**४.२८.१२९ ब्रह्माण्या लक्षणम्**

**क्रि. ५ . २२९ , २३०**

ब्रह्माणीं पिङ्गलां चैव चतुर्वक्त्रां चतुर्भुजाम्।
कलशाक्षमालां दधतीं जटामण्डलमण्डिताम्।।

दर्भध्वजां हंसरथां चैत्रे याम्यदिनोद्भवाम्।

**वि. २० . १३१**

[ अत्र रक्तवस्त्रधरा इत्यधिकम्। ]

### ४.२८.१३० सरित्प्रियाया लक्षणम्

**क्रि. ५ . २३० -२३२**

सरित्प्रियां श्यामवर्णां शूलहस्तां चतुर्भुजाम्।।

तस्या हंसो ध्वजः प्रोक्तः सौरभेयी च वाहनम्।

वैशाखे रेवतीजातां रक्तवस्त्रां त्रिलोचनाम्।।

मौलौ वेणीसमायुक्तां भीमरूपां भयानकाम्।

**वि. २० . १३१**

[ अत्र श्यामवर्णाम् इत्यस्य स्थाने श्वेतवर्णा इति, रक्तवस्त्राम् इत्यस्य स्थाने कृष्णाम्बरधरा इति च विशेषः। ]

### ४.२८.१३१ वैशाखिन्या लक्षणम्

**क्रि. ५ . २३२, २३३**

वैशाखिनी स्वर्णनिभा शक्तिहस्ता चतुर्भुजा।।

कृकलासध्वजा रक्तवसना च गुहाधिपा।

ज्येष्ठमासे तथा देवी कृत्तिकर्क्षसमुद्भवा।।

**वि. २० . १३१**

[ अत्र रक्तवर्णा श्वेताम्बरधरा षण्मुखी इति च विशेषः। ]

**४.२८.१३२ वैष्णव्या लक्षणम्**

**क्रि. ५ . २३४**

शङ्खचक्रधरा श्यामा वैष्णवी नीलवासिनी।
फाल्गुने श्रावणोद्भूता गरुडध्वजवाहना।।

**वि. २० . १३१**

[ अत्र पीताम्बरधरा इति विशेषः। ]

**४.२८.१३३ वाराह्या लक्षणम्**

**क्रि. ५ . २३५**

वाराही कृष्णवर्णा च वराहवदना तथा।
शङ्खचक्रधरा चैव वराहध्वजवाहना।।
पौषे श्रवणसम्भूता रक्तवस्त्रा चतुर्भुजा।

**वि. २० . १३१**

[अत्र शस्त्रपाणिरिति विशेषः। ]

**४.२८.१३४ इन्द्राण्या लक्षणम्**

**क्रि. ५ . २३६, २३७**

इन्द्राणी यवसश्यामा वज्रहस्ता चतुर्भुजा।।
श्वेतवस्त्रसमायुक्ता शुकतुण्डाख्यवाहना।
वेणुपत्रध्वजा माघे ज्येष्ठानक्षत्रसम्भवा।।

**वि. २० . १३१**

[ अत्र रक्ताम्बरधरा इति विशेषः। ]

**४.२८.१३५ काल्या लक्षणम्**

**क्रि. ५ . २३८ - २४०**

काली करालवदना कालाङ्गी चोष्ट्रवाहना।

पिशाचाङ्कध्वजा चैव वह्निज्वालाभमूर्धजा।।

प्रोष्ठपादे यमोद्भूता शूलपाशकपालिनी।
रक्तोग्रनयनापाङ्गा भ्रूभङ्गविकृताननना।।

नरस्त्रीणामिव मुखं दंष्ट्राभ्यां समलङ्कृतम्।
त्रिनेत्र्यर्धेन्दुमकुटा नागाभरणसंयुताः।।

**वि. २० . १३१**

[ अत्र रक्ताम्बरधरा इत्यधिकम्। ]

### ४.२८.१३६ परिवारभूतसप्तमातॄणां सामान्यं स्वरूपम्

**वि. २० . १३१**

एता एकप्रासादे समासीना नामाद्यक्षरबीजाः पिशाचध्वजवाहनाः आर्द्रोद्भवा गणध्वनियुताः सप्तमातरः।

### ४.२८.१३७ सप्तमातॄणां विषये प्रसारासनस्य लक्षणम्

**क्रि. ५ . २४१, २४२**

प्रसारासनमासीनाः सप्तमातर ईरिताः।
दक्षिणं पादमाकुञ्च्य वामं पादं प्रसार्य च ।।

प्रसारासनमित्युक्तं स्त्रीणां सामान्यमेव तत्।

### ४.२८.१३८ जयादीनां लक्षणम्

**वि. २० . १३२**

पश्चिमे प्राङ्मुखा अतिरक्ता शुकपत्रनिभाम्बरा जया, हाटकाभा शुकपत्रनिभाम्बरा विजया, हरिताङ्गी रक्तवस्त्रधरा विन्दा, कनकाभा श्वेतवस्त्रधरा पुष्टिका,घातकीपुष्पसङ्काशा झषपत्रनिभाम्बरा नन्दका,

कुमुदाभा सस्यश्यामनिभाम्बरा कुमुद्वती, उत्पलनिभा नीलाम्बरधरा उत्पलका, अशोकपत्रनिभा शुकपत्रनिभाम्बरा विशोका च, एताः पद्महस्ताः द्विभुजाः कृष्णकुञ्चितमूर्धजाः वीणावेणुरवाः शुकध्वजवाहनाः नामाद्यक्षरबीजा धनिष्ठाजा जयाद्याः।

### ४.२८.१३९ सप्तरोहिणीनां लक्षणम्

**वि. २० . १३२, १३३**

उत्तरे दक्षिणाभिमुखाः सर्वा मरतकप्रभाः पुष्पाम्बरधराः पुष्पहस्ताः द्विभुजाः कृष्णकुञ्चितमूर्धजाः मयूरध्वजवाहनाः मृदङ्गरवाः रोहिणीजाता नामाद्यक्षरबीजाः सप्तरोहिण्यः।

**खि. १५ . १०० - १०४**

रोहिणीः कारयेत् सर्वा भूमिवद्भूषणैर्युताः।।

सङ्क्रीडमानास्ताः सर्वा भूषणैः समलङ्कृताः।
मयूररथ्यो रोहिण्यः कृकलासध्वजप्रियाः।।

सुमुखा नन्दिनी माया कीकसा च सुलोचना।
वाहिनी यायिनी कामा शैष्यस्सर्वाः प्रकीर्तिताः।।

अक्षं च लोहिताक्षं च कुर्यात् तासां च रक्षणे।
अर्चयित्वा तु ताः सर्वा रक्षयेच्च विशेषतः।।

सर्वास्ताः पिञ्जवत्यश्च पुष्पहस्ताः प्रमोदनाः।
शुक्लकञ्चुकसंयुक्ताः नित्यं लोकप्रसादकाः।।

**क्रि. ५ . १८६ , १८७**

[ अत्र रोहिणीसम्भवा तैष्ये इत्यधिकम्। ]

### ४.२८.१४० वत्सरस्य परिवारदेवस्य लक्षणम्

**वि. २० . १३३**

आग्नेय्यां पद्मपत्रनिभाः पुष्पाम्बरधरा द्विभुजाः दण्डहस्ताः शशध्वजवाहनाः शङ्खरवाः स्वातीजाता (नित्या) नित्यादिबीजाः सुगणानामीश्वरा वत्सराः।

### ४.२८.१४१ प्राणादीनां लक्षणम्

**वि. २० . १३३**

नैर्ऋत्यां कनकाभाः सिताम्बरधराः द्विभुजाः असिधराः प्लवङ्गवाहनाः शङ्खध्वजाः हंसरवाः स्वात्युद्भवा यकारबीजा दायिनीश्वराः प्राणादयः।

### ४.२८.१४२ मरुतां लक्षणम्

**वि. २० . १३३**

वायव्यां धूमाभाः सिताम्बरधराः द्विभुजाः असिधराः प्लवङ्गवाहनाः शङ्खध्वजाः हंसरवाः उद्दधिनीशाः यकारबीजाः मरुतः।

### ४.२८.१४३ शतरुद्राणां लक्षणम्

**वि. २० . १३४**

ऐशान्यां पश्चिमाभिमुखाः श्वेताभाः व्याघ्रचर्माम्बराः नीलग्रीवास्त्रिनेत्राः पिङ्गनेत्राः शकारबीजा अन्यत् सर्वं रुद्रवत्।

### ४.२८.१४४ एकादशरुद्राणां लक्षणम्

**वि. २० . १३४**

तद्दक्षिणे[1] अन्तराले पश्चिमाभिमुखाः श्वेतवर्णा व्याघ्रचर्माम्बरधरा नीलग्रीवास्त्रिणेत्राश्च। अन्यत् सर्वं रुद्रवत्, एकादशरुद्राः।

---

1 शतरुद्राणां दक्षिणत इत्यर्थः।

### ४.२८.१४५ द्वादशादित्यानां लक्षणम्

**वि. २० . १३४**

तद्दक्षिणे[1] पश्चिमाभिमुखा भास्करवत् द्वादशादित्याः ।

### ४.२८.१४६ गन्धर्वाणां लक्षणम्

**वि. २० . १३४**

दक्षिणे च उत्तराभिमुखाः पद्मकिञ्जल्कसन्निभाः पुष्पवस्त्रधराः दंष्ट्रामुखा द्विभुजाः पाशहस्ताः सिंहनादरवाः गजवाहनकेतुका रम्याद्यक्षरबीजा रक्तास्सक्ताः सौम्यजाता गन्धर्वाः ।

### ४.२८.१४७ मुनीनां लक्षणम्

**वि. २० . १३५**

तत्पश्चिमे[2] च उत्तराभिमुखाः कनकाभा जटामकुटधराः कुशाम्बरधराः कुशकृष्णाजिनधराः अनूराधाजा जलघोषरवाः तपोधिपाः तपाद्यक्षर-बीजा मुनयः ।

### ४.२८.१४८ परिवारदेवानां सप्तर्षीणां नामानि

**खि. १५ . १४५**

मरीचिः पुलहश्चैव पुलस्त्यः क्रतुरेव च।
वसिष्ठोऽत्रिरहं[3] चेति मुनयः सप्त कीर्तिताः।।

**क्रि. ५ . २१३**

### ४.२८.१४९ सप्तर्षिपत्नीनां नामानि

**क्रि. ५ . २१४**

सम्भूतिश्च क्षमा प्रीतिः सन्नत्यूर्जाऽनसूयका: ।

---

1 एकादशरुद्राणां दक्षिणत इत्यर्थः। 2 गन्धर्वाणां पश्चिमे। 3 भृगुः।

अरुन्धती क्रमादेताः कर्तव्यास्तैः सहासने।।
खि. १५. १४६,१४७

**४.२८.१५० सप्तर्षीणां पूजनफलम्**

खि. १५ . १४० - १४४

मुनीन् सर्वान् समासीनान् सम्भूतीशादिकान् समान्।
तदा द्विबाहुकान् स्थाने सर्वलोकपितामहान्।।

पितॄन् देवान् धारयतः तपसा सर्वमानुषान्।
द्यां च गां लोकचक्षूंषि सदा गह्वरवाहनान्।।

जङ्गमान् स्थावरानन्यान् तपसा तारयिष्यतः।
लब्धप्रसादास्ते विष्णोर्जगत्पालनतत्पराः।।

तस्मात् तानर्चयेन्नित्यं सर्वलोकैकशान्तये।
अनावृष्टिगदोत्पातवह्नितोयविषादिकम्।।

विलुम्पनं च प्रोद्भूतं दैविकं भयमष्टधा।
नश्यन्ति दोषा यत्रैते पूज्यन्ते मुनयः क्रमात्।।

**४.२८.१५१ सप्तर्षिष्वन्यतमस्य भृगोर्लक्षणम्**

खि. १५ . १३० - १३९

नवार्धतालमानेन मां[1] च कुर्याच्चतुर्भुजम्।।

ब्राह्ममासनमासीनं ब्रह्माञ्जलिकरद्वयम्।
अङ्के वामे तथोत्तानं प्रसृतं तस्य चोपरि।।

हस्तं च दक्षिणं तस्य चोपर्युत्तानमाचरेत्।
नासाग्रे प्रसृता दृष्टिर्योगदृष्टिरिति स्मृता।।

1 भृगुमित्यर्थः।

दक्षिणे चोर्ध्वगे हस्ते कलशं मम कारयेत्।
वामे शिक्यं च संशुद्धं ब्रह्मदण्डं च वैणवम्।।

जातिहिङ्गुलिकाभं वै मुखं च मकुटे जटाम्।
ताम्रास्यनयनं कुर्यात् सम्मुखे मृगचर्म च ।।

शुष्कवल्कलवस्त्रं च मुनिभिः सह वा विना।
परिवारैश्च सहितं विना चेन्मद्गृहे तथा।।

समृद्धिश्च धनश्चोभौ -------------।
एतौ सस्यजपावर्णौ व्याजनौ कुकुराक्षकौ।।

देवी सरस्वती चान्या ब्रह्मश्रीः परिकीर्तिता।
किं चार्धमासनं तस्याः कुर्यात्तु पृथगेव वा।।

शैषिकं चार्चयेन्नित्यं प्रियव्रतमपाक्षिकम्।
मन्त्रांस्तान् वाहनं कुर्याद्यावन्तः स्युः समाहिताः।।

स्थापने मम नक्षत्रं कुर्यात् प्रोष्ठपदोत्तरम्।
उत्तरां फल्गुनीं चाथ पौर्णमासीं च सप्तमीम्।।

**क्रि. ५ . १९८ - २०३**

**४.२८.१५२ पुलहस्य लक्षणम्**

**क्रि. ५. २०६ , २०७ , २१२**

पुलहस्ताम्रवर्णोऽयम् आसीनश्च पुलस्त्यवत्।।

क्षमाधीशः क्षमाधैर्यः तुलाधारोऽस्य वाहनम्।
हस्तजश्चाश्वयुङ्मासि सर्वमन्यत् भृगोरिव।।

-------------------------------

द्विबाहवो मरीच्याद्या अङ्के वामकरं तथा।
तदूर्ध्वे दक्षिणं पाणिमुत्तानं परिकल्पयेत्।।

### ४.२८.१५३ वसिष्ठस्य लक्षणम्

**क्रि. ५. २०९, २१०, २१२**

वसिष्ठोऽथ हरिद्राभोऽरुन्धतीशस्तथैव च ।
ऊर्वाणध्वजसंयुक्तः वषट्काराख्यवाहनः ।।

तैष्ये पुष्यर्क्षसञ्जातः ब्रह्मदण्डायुधस्तथा।

-------------------------------

द्विबाहवो मरीच्याद्या अङ्के वामकरं तथा।
तदूर्ध्वे दक्षिणं पाणिमुत्तानं परिकल्पयेत्।।

### ४.२८.१५४ क्रतोर्लक्षणम्

**क्रि. ५ . २०८, २१२**

सन्नतीशः क्रतुः शुक्लो वैशाखे मासि हस्तजः।
बडबावाहनं प्रोक्तं सर्वमन्यत् भृगोरिव।।

----------------------------

द्विबाहवो मरीच्याद्या अङ्के वामकरं तथा।
तदूर्ध्वे दक्षिणं पाणिमुत्तानं परिकल्पयेत्।।

### ४.२८.१५५ पुलस्त्यस्य लक्षणम्

**क्रि.५ . २०५, २०६, २१२**

पुलस्त्यः काञ्चनाभोऽयम् आसीनो ब्राह्ममासनम्।
प्रीतीशः शङ्खहेतिश्च तथा षट्पदवाहनः।।

चैत्रेऽनुराधसञ्जात ऊर्वाणाख्यो ध्वजस्तथा।

-------------------------------

द्विबाहवो मरीच्याद्याः अङ्के वामकरं तथा।
तदूर्ध्वे दक्षिणं पाणिमुत्तानं परिकल्पयेत्।।

### ४.२८.१५६ मरीचेर्लक्षणम्

**क्रि. ५ . २०३, २०४, २१२**

ब्रह्मासने समासीनं मरीचिमनलप्रभम्।
षडङ्घ्रिवाहनं मालायुधं सुमतिमञ्जलिम्।।

तस्योत्पत्तिस्तथाषाढे नक्षत्रं पूर्वफल्गुनी।
ध्वजश्च ब्रह्मणः प्रोक्तः सर्वमन्यत् भृगोरिव।

--------------------------------

द्विबाहवो मरीच्याद्या अङ्के वामकरं तथा।
तदूर्ध्वे दक्षिणं पाणिमुत्तानं परिकल्पयेत्।।

### ४.२८.१५७ अत्रेर्लक्षणम्

**क्रि. ५ . २१० - २१२**

अनसूयापतिस्त्वत्रिः मधुवर्णोऽस्य वाहनम्।।

वषट्कारश्च ऊर्वाणध्वजः श्रवणसम्भवः।
कार्तिक्यां मासि सम्भूतः सर्वमन्यद् भृगोरिव।।

द्विबाहवो मरीच्याद्या अङ्के वामकरं तथा।
तदूर्ध्वे दक्षिणं पाणिमुत्तानं परिकल्पयेत्।।

### ४.२८.१५८ अप्सरसां लक्षणम्

**वि. २० . १३५**

तत्पश्चिमे[1] प्राङ्मुखा हेमाभाः पुष्पाम्बरधराः पद्महस्ता द्विभुजाः कृष्णकुञ्चितमूर्धजाः शुकस्वररवा हंसध्वजवाहना अमृताद्यक्षरबीजा उत्तरजा अप्सरसः।

---

1 मुनीनां पश्चिमे।

### ४.२८.१५९ अश्विनोर्लक्षणम्

**वि. २० . १३५**

तदुत्तरे[1] प्राङ्मुखौ गोक्षीराभावशोकपुष्पवस्त्रौ द्विभुजौ मयूरवाहनौ काकपक्षध्वजौ हंसरवौ सुन्दरीशौ अश्वाद्यक्षरबीजौ अश्विनौ।

### ४.२८.१६० वसूनां लक्षणम्

**वि. २० . १३५**

उत्तरे दक्षिणाभिमुखाः पद्माभाः पुष्पवस्त्रधराः पद्महस्ता द्विभुजाः शशध्वजवाहनाः स्वात्युद्भवा वसुप्रियाणामीशा वकारबीजाः शङ्खरवा वसवः।

### ४.२८.१६१ विद्याधराणां लक्षणम्

**वि. २० . १३६**

तत्पूर्वे[2] दक्षिणाभिमुखाः श्यामाभा रक्तवस्त्रधरा दंष्ट्रामुखा रक्तकेशा गदाधरा द्विभुजा डमरुकधरा महिषध्वजवाहना मेघरवा विद्याधरीणामीशा मन्त्रादिबीजा विद्याधराः।

### ४.२८.१६२ तुम्बुरोर्लक्षणम्

**वि. २० . १३६**

षष्ठावरणे पूर्वद्वारोत्तरे रक्ताभः श्वेताम्बरधरो जटाधरो द्विभुजो वीणाहस्तो गानरवः सङ्गीतापतिः वायुवाहनः स्रुवध्वजो अभिजिज्जातो नामाद्यक्षरबीजस्तुम्बुरुः।

### ४.२८.१६३ नारदस्य लक्षणम्

**वि. २० . १३६**

दक्षिणे[3] पश्चिमाभिमुखः श्वेताभो रक्ताम्बरधरो द्विभुजो वीणाहस्तः

---

1 अप्सरसाम् उत्तरे। 2 वसूनां पूर्वतः। 3 पूर्वद्वारस्य ।

तालरवः स्वरेशो वायुवाहनः कूर्चध्वजोऽभिजिज्जातो नामाद्यक्षरबीजो नारदः।

### ४.२८.१६४ ऋतूनां लक्षणम्

**वि. २० . १३६**

दक्षिणे च उत्तराभिमुखा अब्जाभाः श्वेतवस्त्रधराः पुष्पहस्ता द्विभुजाः पुष्परथवाहनाः विद्युत्ध्वजाः मेघरवाः श्वेतकृष्णापतयः मूलोद्भवाः गकारबीजाः षड्तवः।

### ४.२८.१६५ प्रजापतेर्लक्षणम्

**वि. २०. १३७**

पश्चिमे प्राङ्मुखः श्वेताभो एकवस्त्रः एष विशेषः। अन्यत् सर्वं विरिञ्चिवत् प्रजापतिः।

### ४.२८.१६६ मुद्गलस्य लक्षणम्

**वि. २० . १३७**

उत्तरे दक्षिणाभिमुखः श्वेताभो रक्ताम्बरधरो जटाधरः कूर्मवाहनः कुशध्वजो वेदरवः सुरगणेशो नामाद्यक्षरबीजः श्रवणजो मुद्गलः।

### ४.२८.१६७ हलधरस्य लक्षणम्

**वि. २० . १३७**

आग्नेय्यां श्वेताभो नीलाम्बरधरो द्विभुजो हलधरः पद्मवाहनः पद्मकेतुर्नामाद्यक्षरबीजो यामापतिर्मैत्रजो हंसरवो हलेशः।

### ४.२८.१६८ जाम्बवस्य लक्षणम्

**वि. २०. १३७**

नैर्ऋत्यां श्यामाभो रक्ताम्बरधरो बालमौलिसमायुक्तः छन्नवीरसमायुक्तो बालापतिर्मृगध्वजवाहनो जकारबीजो रेवतीजो मृदङ्गरवो जाम्बवः।

### ४.२८.१६९ असुरस्य लक्षणम्

**वि. २० . १३७,१३८**

ऐशान्यां श्यामाभो रक्ताम्बरधरो द्विभुजः शूलधरो रक्तकेशो दंष्ट्रामुखो नीलापतिः खरध्वजवाहनो घोरमूलः अमृताद्यक्षरबीजोऽसुरः।

### ४.२८.१७० किन्नरमिथुनस्य लक्षणम्

**वि. २० . १३८**

अन्तराले प्राच्यां पश्चिमाभिमुखं पक्षिपादं पुंस्त्रीरूपोर्ध्वकायं पक्षयुतं वीणातालहस्तं नामाद्यक्षरबीजं वायुवाहनं नालध्वजं स्वररवहस्तजं किन्नरमिथुनम्।

### ४.२८.१७१ प्रह्लादस्य लक्षणम्

**वि. २० . १३८**

तद्दक्षिणे[1] पश्चिमाभिमुखो रक्ताभः सिताम्बरधरो जटाधरः पुष्पहस्तो द्विभुजः प्राणेशोऽश्वध्वजवाहनो रोहिणीजः शङ्खरवः प्रणामाद्यक्षरबीजः प्रह्लादः।

### ४.२८.१७२ मदनस्य लक्षणम्

**वि. २० . १३८**

तद्दक्षिणे[2] च उत्तराभिमुखः श्यामाभो रुक्माम्बरधरो द्विभुज इक्षुचापः पुष्पशरो रतिपतिर्मकरध्वजवाहनः पुनर्वसुजातः स्वररवो वकारबीजो मदनः।

### ४.२८.१७३ विपाया लक्षणम्

**वि. २० . १३८,१३९**

तत्पश्चिमे[3] च उत्तराभिमुखा पाटलिपुष्पनिभा रक्तवस्त्रधरा पुष्पहस्ता

1 किंनरमिथुनस्य दक्षिणतः। 2 प्रह्लादस्य दक्षिणे । 3 मदनस्य पश्चिमे।

द्विभुजा कृष्णकुञ्चितमूर्धजा ललाटोपरि पुष्पचूडासमन्विता हंसध्वजवाहना शुकस्वररवा विद्यादिबीजा विपा।

### ४.२८.१७४ व्याजिन्या लक्षणम्

**वि. २० . १३९**

पश्चिमे प्राङ्मुखा हेमाभा श्यामाम्बरधरा द्विभुजा पुष्पहस्ता कृष्णकुञ्चितमूर्धजा वीणावेणुरवा शुकध्वजवाहना चित्राजाता नामाद्यक्षरबीजा व्याजिनी।

### ४.२८.१७५ कामिन्या लक्षणम्

**वि. २० . १३९**

तदुत्तरे[1] रक्ताभा श्वेताम्बरधरा च। अन्यत् सर्वं व्याजिनीवत् कामिनी।

### ४.२८.१७६ चन्द्राभायाः लक्षणम्

**वि. २० . १३९**

उत्तरे दक्षिणाभिमुखा श्वेताभा कृष्णाम्बरधरा पुष्पहस्ता द्विभुजा ललाटोपरि पुष्पचूडासमन्विता खगध्वजवाहना हंसरवा हस्तजा नामाद्यक्षरबीजा चन्द्राभा।

### ४.२८.१७७ सुन्दरस्य लक्षणम्

**वि. २० . १३९**

तत्पूर्वे[2] दक्षिणाभिमुखः श्यामाभो रक्ताम्बरधरो द्विभुजः पद्महस्तः सर्वाभरणभूषितो गजवाहनः खगध्वजः सुनन्दापतिर्नामाद्यक्षरबीजः शतभिषग्जातः सुन्दरः।

---

1 व्याजिन्या उत्तरे। 2 चन्द्राभायाः पूर्वतः।

## ४.२८.१७८ वास्तुपददेवानामर्चनस्थानम्

### वि. २० . १४०

सप्तमावरणे पूर्वद्वारे ब्रह्माणं, तद्दक्षिणेऽर्यम्णं पश्चिमाभिमुखौ, दक्षिणे दण्डधरमुत्तराभिमुखं, पश्चिमे पाशभृतं प्राङ्मुखम्, उत्तरे धनदं दक्षिणाभिमुखम्, आग्नेय्यां सवितारं, सावित्रं नैर्ऋत्याम्, इन्द्रम् इन्द्राजं वायव्यां, रुद्रं रुद्राजम् ऐशान्याम्, अप आपवत्सं च अर्चयेत्। अन्तराले प्राच्यामुत्तरपार्श्वे च ईशं, पर्जन्यं, जयन्तं, माहेन्द्रं, नागं, भूतं, यक्षं च, तद्दक्षिणे पार्श्वे च आदित्यं सत्यकं भृशमन्तरिक्षं दुर्गां घोटमुखीं धात्रीं वपुषं च, दक्षिणे पूर्वभागे अग्निं, वितथं, गृहक्षतं, राक्षसं, जयं कृष्णं च, तत्पश्चिमभागे यमं, गन्धर्वं, भृङ्गराजं, सुरुण्डं शिवं, प्राणं च, पश्चिमे दक्षिणभागे निर्ऋतिं, दौवारिकं, पुष्पदन्तं, कविं, चक्रं पुरुहूतं च; तदुत्तरभागे सरित्पतिमसुरं, शोषणं, रोगं, विद्यां, यशसं, भद्रां च ; उत्तरपश्चिमभागे जवनं, नागं, मुख्यं, भल्लाटं, वेदभृतं तापसं, संधुषं च ; तत्पूर्वभागे सोमम्, अर्गलम्, अदितिं ,सूरिदेवं विद्याम् अमितं पाञ्चभौतिकम् एतान् देवान् एकमूर्त्या अर्चयेत्। -------------- एषाम् उक्तानि वर्णवाहनादीनि ज्ञात्वा अर्चयेत्।

## ४.२८.१७९ अनुक्तपरिवारदेवानां लक्षणम्

### वि. २० . १४०, १४१

प्राकारबाह्ये महत् पीठं कृत्वा अत्रानुक्तदेवान् सर्वान् 'देवा' निति समर्चयेत्। ---------------- अनुक्ताः सर्वेऽप्याकाशवर्णाः श्वेताम्बरधराः पुष्पहस्ता द्विभुजाः खगध्वजवाहनाः शङ्खरवाः तत्तन्नाम्ना (मानः) प्रियायुक्ता नामाद्यक्षरबीजा अभिजिज्जाताश्च। एवं ज्ञात्वाऽर्चयेत्।

## ४.२८.१८० मत्स्यादिपरिवारदेवानां स्थापनस्थानम्

### वि. २० . १४१, १४२

मत्स्यकूर्मवराहनारसिंहवामनरामरामरामकृष्णकल्किन इति दश प्रादुर्भावान्

प्रथमावरणे द्वितीये वा, पृथक् पृथक् भित्तिपार्श्वे, प्रासादाभिमुखं चित्रं, चित्रार्धमाभासं वा सङ्कल्प्याऽभिमुखे तत्तत्कौतुकं सन्न्यस्याऽर्चयेत्।

**स. ३५ . ७८, ७९**

**क्रि. १७. ३८ - ४४, ४७**

अवताराश्रयं कुर्वन् प्रथमावरणादिषु।
मत्स्यकूर्मौ प्रकुर्वीत पूर्वद्वारस्य दक्षिणे।।

वराहत्रयमाग्नेयाद्याम्यान्तं परिकल्पयेत्।
नारसिंहं प्रकुर्वीत गिरिजं याम्यपश्चिमे।।

स्थूणजं नैर्ऋते देशे नीलवारुणमध्यमे।
सौदर्शनं नृसिंहं तु वारुणे च ततः परम्।।

कुर्याल्लक्ष्मीनृसिंहं च वरुणोदानमध्यमे।
पातालनरसिंहं च वामनं वायुदिश्यपि।।

धनदोदानयोर्मध्ये कारयेत्तु त्रिविक्रमम्।
जामदग्न्यं तु कौबेरे कुबेरेशानमध्यमे।।

कुर्याद्दाशरथिं राममैशान्ये तु हलायुधम्।
ईशानेन्द्रान्तरे कृष्णं द्वारवामे तु कल्किनम्।।

वराहं नरसिंहं च रामं कृष्णं तथैव च ।
दिक्षु सर्वासु संस्थाप्य पूजयेत् सर्वसिद्धये।।

---

सुदशनप्रतिष्ठा चेत् याम्ये वा नैर्ऋते तथा।।
कल्पयेदीश्वरं प्राच्यां प्रागादिपरिकल्पनम्।(?)

**वि. २१ . १४७, १४८**

प्रादुर्भावानां प्राकाराभ्यन्तरे विस्तीर्णे मनोरमे देशे विमानं, मण्डपं, कूटं

वा, कृत्वा ध्रुवबेरं चित्रं, चित्रार्धं, चित्राभासं वा, तदभिमुखे कौतुकं संस्थाप्य अभावे पीठं वा सङ्कल्प्यार्चयेत्। अथवा प्रासादपार्श्वे वीन्द्रं कृत्वा प्रासादभित्त्याश्रितान् बहिर्मुखान् संस्थाप्याऽर्चयेत्। अशक्तश्चेत् प्राकारपार्श्वे अभिमुखे दक्षिणोत्तरयोः प्राकाराभ्यन्तरे मुखमण्डपे अन्तराले वा दक्षिणे दाशरथिं, वामे कृष्णं सकलं कौतुकमेव कृत्वा संस्थाप्याऽर्चयेदिति केचित्।

**क्रि. ११ . १३४, १३५**

स्थानं दशावताराणां ध्रुवकौतुकसंयुतम्।।
अन्तरालयके केचिदिच्छन्ति मुनिसत्तमाः।

## ४.२८.१८१ मत्स्यस्य लक्षणम्

**वि. २१. १४२**

पूर्वद्वारोत्तरे मत्स्यरूपं श्वेताभं रक्तास्यं रक्तनेत्रं कृष्णपक्षयुतं सङ्कल्प्य अभिमुखे कौतुकं चतुर्भुजं सन्न्यस्य ---------------------
मत्स्यकूर्मयोर्वाहनकेत्वादीन् आदिमूर्तेरिव समाचरेत्।

## ४.२८.१८२ कूर्मस्य लक्षणम्

**वि. २१. १४२**

तद्दक्षिणे[1] कूर्मरूपं श्वेताभं पञ्चवर्णयुतं सङ्कल्प्याऽभिमुखे कौतुकं चतुर्भुजं सन्न्यस्य ----------------------------
मत्स्यकूर्मयोर्वाहनकेत्वादीन् आदिमूर्तेरिव समाचरेत्।

## ४.२८.१८३ वराहस्य लक्षणम्

**वि. २१ . १४२**

दक्षिणे वराहं पूर्ववत् सङ्कल्प्याभिमुखे कौतुकं चतुर्भुजं विष्णुरूपं समर्चयेत्।

1 मत्स्यस्य दक्षिणे।

**४.२८.१८४ नृसिंहस्य लक्षणम्**

**वि. २१ . १४२**

पश्चिमे नृसिंहः प्राङ्मुखः सिंहासनोपरि द्वौ पादौ व्यत्यस्य उत्कुटिकमासीनो बद्धयोगपट्टिकश्चतुर्भुजः शङ्खचक्रधरो जानूपरि प्रसारितहस्तः भवेदेष विशेषः, अन्यत् सर्वं पूर्ववत्, कौतुकं तद्रूपं, चतुर्भुजं विष्णुरूपं वा, सङ्कल्प्यार्चयेत्।

**४.२८.१८५ वराहनृसिंहबेरयोरवस्थानम्**

**क्रि. १७ . ३७**

आसीनावेव सर्वत्र वराहनरसिंहकौ।।

**४.२८.१८६ नृसिंहादिपरिवारदेवानां स्थापनस्थानम्**

**क्रि. ११ . १३०, १३१**

नारसिंहं वराहं च वामनं च त्रिविक्रमम्।
ध्रुवबेरं विना कृत्वा कौतुकं लक्षणान्वितम्।।

स्थापयित्वा तथा विष्णुं पूजयेदग्रमण्डपे।

**प्र. १६. ११७, ११८**

**४.२८.१८७ वामनस्य लक्षणम्**

**वि. २१. १४३**

उत्तरे वामनं पूर्ववत् सङ्कल्प्य कौतुकं चतुर्भुजमेव कृत्वार्चयेत्।

**४.२८.१८८ परशुरामस्य लक्षणम्**

**वि. २१ . १४३**

आग्नेय्यां परशुरामः पश्चिमाभिमुख उत्तराभिमुखो वा रक्ताभः श्वेताम्बरधरो दक्षिणकरेण परशुधर उद्देश्यवामकरो जटामकुटयुतः सोपवीतः कमलेशः, अन्यत् सर्वमादिमूर्तेरिव।

## ४.२८.१८९ परशुरामस्य देव्याः कमलाया लक्षणम्

### वि. २१ . १४३

तद्दक्षिणे[1] कमलां सीतावत् कारयेत्।

## ४.२८.१९० राघवस्य लक्षणम्

### वा. २१

स्वप्रधाने मया प्रोक्ते वक्ष्यमाणे प्रधानके।
आलये गर्भगेहे तु स्थापिते तु चतुर्भुजम्।।

बेरे कौतुकसंयुक्ते विधिना चार्चनाकृतम्।
पश्चाद्बिम्बानि शोभार्थमुत्सवार्थं तु यत्नतः।।

वीर्यार्थं विजयार्थं च शत्रुपक्षक्षयाय च ।
लोहं शुद्धं समाहृत्य यजमानस्य शक्तितः।।

ध्रुवबेरस्य मानं यत् चतुर्थांशं विभज्य च ।
एकभागं व्यपोह्यैव त्रिभागं चोत्तमं भवेत्।।

द्विभागं मध्यमं प्रोक्तमेकभागं तु चाधमम्।
कौतुकस्योक्तमानं वा मानं मात्राङ्गुलेन वा ।।

त्रयोदशाङ्गुलं तिर्यग्द्वियङ्गुलविवर्धनात्।
एकोनत्रिंशदङ्गल्ये नवधा चेति केचन।।

विधिना कारयेद्रामं सीतालक्ष्मणसंयुतम्।
विमानाद्दक्षिणे पार्श्वे प्रथमावरणेऽथवा ।।

प्रतिष्ठाप्यार्चनं यत्तु परं प्राधान्यमुच्यते।

---

1 परशुरामस्य दक्षिणे ।

**वि. २१ . १४३**

नैर्ऋत्यां राघव उत्तराभिमुखः प्राङ्मुखो वा श्यामाभो रक्ताम्बरधरो मकुटादिसर्वाभरणयुक्तः श्रीवत्सवक्षा द्विभुजो दक्षिणकरेण शरधरो वामकरेण धनुरालम्ब्य त्रिभङ्ग्यास्थितो माघमासे पुनर्वसुजातः सीतानाथोऽन्यत् सर्वमादिमूर्तेरिव।

### ४.२८.१९१ सीताया लक्षणम्

**वि. २१ . १४३**

[1]तद्दक्षिणे सीता, हेमाभा शुक्लाम्बरधरा धृतपद्मवामहस्ता प्रसारितदक्षिणकरा सुस्थितदक्षिणपादा आकुञ्चितपादा उद्बद्धकुन्तला करण्डकामकुटियुता वा नामाद्यक्षरबीजा, अन्यत् सर्वं श्रीवत्।

### ४.२८.१९२ सौमित्रेः लक्षणम्

**वि. २१ . १४४**

वामे[2] सौमित्रिः, कनकाभः श्यामाम्बरधरो द्विभुजो, रामवत् त्रिभङ्गस्थितश्चापधर उद्बद्धकुन्तलो वैशाखे ------------- रोहिणीजातो लक्षाद्यक्षरबीजोऽन्यत् सर्वं रामवत्।

### ४.२८.१९३ भरतस्य लक्षणम्

**वि. २१ . १४४**

दक्षिणभागे[3] भरतः, श्यामाभो रक्ताम्बरधर उद्बद्धकुन्तलः शरचापौ, खड्गखेटकौ वा, दधानो द्विभुजः त्रिभङ्गस्थश्चैत्रे------- स्वात्युद्भवोऽमलेशो भगाद्यक्षरबीजो श्रीवत्सकौस्तुभौ विना अन्यत् सर्वं रामवत्।

---

1 राघवस्य दक्षिणे । 2 रामस्य। 3 रामस्य।

## ४.२८.१९४ शत्रुघ्नस्य लक्षणम्

**वि. २१ . १४४**

वामे[1] शत्रुघ्नो हेमाभो रक्ताम्बरधरः उद्बद्धकुन्तलो ज्येष्ठमासे--- धनिष्ठाजातो नामाद्यक्षरबीजो निर्मलेशः, अन्यत् सर्वं लक्ष्मणवत्।

## ४.२८.१९५ हनुमतः लक्षणम्

**वि. २१ . १४४, १४५**

दक्षिणे[2] पुरतोऽञ्जनाभः श्वेतवस्त्रधरः कपिरूपः सर्वाभरणभूषितः द्विभुजः दक्षिणहस्तेनास्यं पिधाय वामहस्तेन वस्त्रं पिधाय अवनतगात्रस्थितो वार्ताविज्ञापनपरो मृगवाहनो दण्डध्वजो महानादरवः श्रावणे मासि श्रवणजातः कल्पाद्यक्षरबीजो हनुमान्।

## ४.२८.१९६ रामायुधस्य शरस्य लक्षणम्

**वि. २१ . १४५**

दक्षिणे शरं नपुंसकं श्यामाभं श्वेताम्बरधरं त्रिणेत्रं रौद्रं समुद्रघोषरवं वायुवाहनं पक्षध्वजं शिरसि शरं माघमासे वारुणे जातं शराद्यक्षरबीजं शरम्।

## ४.२८.१९७ शाङ्र्गस्य स्थापनस्थानम्

**वि. २१ . १४५**

वामे[3] शाङ्र्गं पूर्ववत्[4]।

## ४.२८.१९८ सुग्रीवस्य लक्षणम्

**वि. २१ . १४५**

दक्षिणे सुग्रीवः श्वेताभो रक्ताम्बरधरो रक्तवसनो द्विभुजः प्राञ्जलिः

---

1 रामस्य । 2 राघवस्येत्यध्याहार्यः। 3 राघवस्येत्यध्याहारः। 4 द्वारदेवताभूतशाङ्र्गवत्।

पादावनतयुक्तो मृगध्वजवाहनो वैशाखे आश्लेषाजो मेघनादरवः सुराद्यक्षरबीजः तारेशः।

### ४.२८.१९९ विभीषणस्य लक्षणम्

**वि. २१ . १४५**

वामे कृष्णवर्णो रक्ताम्बरधरो रक्तकेशः सुदंष्ट्रो द्विभुजः शूलधरो हृदये अञ्जलिसंयुक्तो मूलजो मेघध्वजवाहनो मेघनादरवो विशुद्धेशो विद्याद्यक्षरबीजो विभीषणः।

### ४.२८.२०० अङ्गदस्य लक्षणम्

**वि. २१ . १४५, १४६**

अभिमुखे[1] श्वेताभो रक्ताम्बरधरो रक्तवदनो द्विभुजः प्राञ्जलिः पादावनतस्थितः सिंहध्वजवाहनः सिंहरवो वैशाखे रोहिणीजोऽङ्गदः।

### ४.२८.२०१ बलभद्रस्य लक्षणम्

**वि. २१ . १४६**

वायव्ये बलभद्रामः श्वेताभः नीलवस्त्रधरो द्विभुजो दक्षिण-हस्तेनाऽवलम्बितमुसलो वामेन हलधरः त्रिभङ्गस्थित उद्बद्धकुन्तलः, अन्यत् सर्वम् आदिमूर्तेरिव।

### ४.२८.२०२ कृष्णस्य लक्षणम्

**वि. २१ . १४६**

ऐशान्यां कृष्णः पश्चिमाभिमुखो, दक्षिणाभिमुखो वा, श्यामाभो रक्ताम्बरधरः सर्वाभरणभूषितः सौन्दर्ययुक्तः कुन्तलयुक्तः बर्हिबन्धयुतः त्रिनतो द्विभुजो

1 रामस्य।

दक्षिणहस्तेन क्रीडायष्टिधरो वामकूर्परेण सत्यभामां गरुडं वाऽऽलम्ब्य सुस्थितः क्रीडारसमाविष्टो रुक्मिणीसत्यभामयोरीशः श्रावणे मासि रोहिणीजातोऽन्यत् सर्वम् आदिमूर्तेरिव।

### ४.२८.२०३ रुक्मिण्याः लक्षणम्

**वि. २१ . १४६**

दक्षिण[1] रुक्माभा शुक्लाम्बरधरा धम्मिल्लकुन्तला, उद्बद्धकुन्तला वा, नामाद्यक्षरबीजा अन्यत् सर्वं श्रीरिव रुक्मिणी।

### ४.२८.२०४ सत्यभामाया लक्षणम्

**वि. २१ . १४६**

वामे[2] सत्यभामा धम्मिल्लकुन्तला उद्बद्धकुन्तला वा,नामाद्यक्षरबीजा, अन्यत् सर्वं महीवत् सत्यभामा।

### ४.२८.२०५ गोपीनाथस्य लक्षणम्

**वि. २१ . १४७**

दक्षिणे रक्ताभः श्वेताम्बरधरो वंशहस्तो माघमासि वारुणे जातो हयध्वजवाहनो हंसरवो गोपीनाथो गवाद्यक्षरबीजो गोपालः।

### ४.२८.२०६ श्रीदाम्नो लक्षणम्

**वि. २१ . १४७**

वामे श्रीदामा श्यामाभः श्वेताम्बरधरः द्विभुजः अञ्जलिसंयुक्तः प्रौष्ठपदे पूर्वाषाढाजो नामाद्यक्षरबीजः अश्वध्वजवाहनो वेणुरवो गोपीनाथः।

---

1 कृष्णस्य। 2 श्रीकृष्णस्य।

### ४.२८.२०७ सुन्दरस्य लक्षणम्

**वि. २१ . १४७**

प्रमुखे गरुडांशः सुन्दरो विहगाद्यक्षरबीजोऽन्यत् सर्वं गरुडवत्।

### ४.२८.२०८ रामकृष्णयोः स्थापनस्थानम्

**ज्ञा. ८५ . १६२**

अथवा देवेशस्य विष्णोः पार्श्वे दक्षिणतो मुखमण्डपे तदावरणे विनैव परिवारैः सायुधं रामं सीतालक्ष्मणाभ्यां हनूमता च सार्धं वामतः कृष्णं च सायुधं देवीभ्यां गरुडेन च युक्तम् अन्यप्रादुर्भावरूपं वा यथेष्टमेव स्थापयेत्।

**क्रि. ११ . १२८, १२९**

अन्तरालेऽथवा विष्णोः दक्षिणोत्तरपार्श्वयोः।
कल्पयेद्रामकृष्णौ तु मुखमण्डप एव वा।।

अथान्तर्मण्डपे वापि तथावरणमण्डपे।
संस्थाप्य कौतुकं बेरमर्चयेदिति केचन।।

**प्र. १६ . ११५, ११६**

**स. ३५ . ८०, ८१**

यदीच्छेद्दक्षिणे रामं सीतालक्ष्मणसंयुतम्।
यमपावकयोर्मध्ये प्रतिष्ठाप्याथवाऽर्चयेत्।।

कुबेरेशानयोर्मध्ये विधिना कृष्णमेव च।
रुक्मिणीसत्यभामाभ्यां प्रतिष्ठाप्याथवार्चयेत्।।

### ४.२८.२०९ कल्किनो लक्षणम्

**वि. २१ . १४७**

पश्चिमे चोत्तरभागे कल्की हयाननः, अन्यत् सर्वमादिमूर्तिरिव समाचरेत्। अभिमुखे कौतुकं चतुर्भुजं संस्थाप्यार्चयेत्।

### ४.२८.२१० द्वारपालानां मानम्

**य. १४ . ९ - १९**

द्वारपालप्रतिष्ठा च प्रवक्ष्यामि तपोधनाः ।।

शिलां सम्यग्गृहीत्वैव कारयेद्विधिचोदितम्।
कुड्यपादोदयं धीमानेकवीथिषु धामसु।।

मण्डपादिषु चान्येषु पादमानेन कारयेत्।
सप्ताष्टनवपङ्क्त्यंशं कृत्वैकांशं व्यपोह्य च ।।

द्वारोदयं स्याच्छिष्टं तत्तुङ्गार्धं विपुलं क्रमात्।
शिष्टैकांशं द्विधाकृत्य सममेव च बुद्धिमान्।।

भुवङ्गार्धं पतङ्गार्धमाहृत्यैव च कारयेत्।
कुड्यपादोदयं तत्तत् षोडशांशं विभज्य च ।।

त्रयोदशांशं चारभ्य तुङ्गं स्यात्तद्ध्रुवस्य च ।
सप्तांशं वा तदष्टांशं तदास्यं तत्तदंशतः।।

भुवङ्गाद्याश्च त्र्यंशं तद्विधाकृत्य तथा चरेत्।
बहुलं तत्तदंशस्स्यात्तस्य तस्य च तस्य च ।।

पादाधिकं वाऽध्यर्धं वा पादोनं द्विगुणं क्रमात्।
द्विगुणं वा तदा धीमान् भुवङ्गविपुलं क्रमात्।।

स्तम्भयोर्घनविस्तारं पुष्पवल्यादि कारयेत्।
व्यासं कुड्यस्य पञ्चांशं विभज्याप्युत्तमं विदुः।।

त्रिपादावस्थानसूत्रं यत्तद्धृते? मध्यं विदुः।
भान्वंशमथवा कृत्वा तत्पदं बाह्यतः क्रमात्।।

पञ्चांशान्तरजं सूत्रं भुवङ्गस्य च मध्यमम्।
एवं सलक्षणं कृत्वा स्थाने सम्यग्विचक्षणः।।

### ४.२८.२११ धात्रादीनां द्वारदेवतानामर्चनस्थानम्

**क्रि. ५ . १२३**

(धात्राद्याः हस्तजास्सर्वे क्रमादाश्वयुजादिषु)
द्वारे द्वारे तु धात्रादीन् षडेतान् सम्यगर्चयेत्।।

### ४.२८.२१२ द्वारदेवस्य धातुर्लक्षणम्

**क्रि. ५ . ११५**

वेणुपत्रनिभो धाता रथयान उदङ्मुखः।
पुष्पकेतुः सन्धिनीशो रक्तवस्त्रश्च दक्षिणे।।

**वि. २० . १११, ११२**

[ अत्र रथकेतुरिति विशेषः। ]

### ४.२८.२१३ विधातुर्लक्षणम्

**क्रि. ५ . ११६**

विधाता शुकपत्राभ ऊर्ध्वेशो गजवाहनः।
सर्पध्वजः शुक्लवस्त्रः पूज्यावेतौ[1] कवाटयोः।।

**वि. २० . १११, ११२**

[ अत्र वामे गन्धर्वस्थाने दक्षिणामुख इति अधिकम्।]

### ४.२८.२१४ भुवङ्गस्य लक्षणम्

**क्रि. ५ . ११७, ११८**

भुवङ्गो दक्षिणशिरा उत्तराङ्घ्रिः खलोचनः।
प्रीतीशोऽग्निशिखाकेतुर्नीलोत्पलदलप्रभः।।

हस्तजो माघमासे तु हृदी वृषभवाहनः।

**वि. २० . १११, ११२**

[ पूजकादिभिः अर्चनाकालात् अन्यत्राऽलङ्घ्यः उपरिस्थाने पूजयेत् इत्यधिकम्। ]

**४.२८.२१५ पतङ्गस्य लक्षणम्**

**क्रि. ५ . ११८, ११९**

पतङ्गोऽधोमुखश्चोर्ध्वः शुक्लाभः पौष्यहस्तजः।।

भरणीशोत्तरशिरा अश्वयानध्वजस्तथा।

कवाटोर्ध्वशिलाश्लिष्टः पूज्यो रक्ताम्बरोऽमलः।।

**वि. २० . १११, ११२**

[ अत्र श्वेतकेतुरिति अधिकम्। ]

**४.२८.२१६ पतिराख्यस्य लक्षणम्**

**क्रि. ५ . १२०, १२१**

पतिरो हेमवर्णाभः किञ्चिद्धाटकमिश्रितः।

उदङ्मुखो रक्तवस्त्रो वृषाङ्गो गजवाहनः।।

नागेशो माघमासे तु तथा हस्तर्क्षजः स्मृतः।

**वि. २० . १११, ११२**

[ अत्र द्वारदक्षिणे, बलेश इति च विशेषः। ]

**४.२८.२१७ वरुणाख्यस्य लक्षणम्**

**क्रि. ५ . १२१, १२२**

वरुणो हेमपद्माभः किञ्चिद्धाटकमिश्रितः।।

धरणीशः फाल्गुने तु हस्तजो रथवाहनः।

शरध्वजोऽत्र पूज्यश्च द्वारभागे तु वामतः।।

वि. २० . १११, ११२

[ अत्र वामे, अवाक्च्छिरा इत्यधिकम्, शङ्खध्वज इति च विशेषः। ]

### ४.२८.२१८ विमानेशानामाभिमुख्यम्

क्रि. ५ . ९१

बहिर्मुखा विमानेशाः प्रासादाश्रयमन्दिराः।

### ४.२८.२१९ आलयबाह्ये अर्चनीयस्य न्यक्षस्य लक्षणम्

क्रि. ५ . १३१, १३२

न्यक्षो दूर्वाङ्कुराभश्च प्रज्ञाप्तीशोऽरुणाम्बरः ।।

श्येनयानध्वजो दण्डपाणिर्वीररवध्वनिः।

रोहिण्यां मार्गशीर्षे तु मासि जातो बहिर्मुखः।।

वि. २० . ११२

[अरुणाम्बर इत्यत्र हेमाम्बरधर इति, आलयस्य बहिः पार्श्वे प्राग्द्वारे अर्चनीय इति च विशेषः। ]

### ४.२८.२२० आलयबाह्ये अर्चनीयस्य विवस्वतो लक्षणम्

क्रि. ५. १३३, १३४

विवस्वान् रक्तवर्णश्च तथैवोत्सादिनीपतिः।

भिण्डिबालध्वजश्चैव दण्डी गवयवाहनः।।

प्रोष्ठपादे मघोद्भूतो द्विभुजो नीलवस्त्रकः।

वि. २०. ११२, ११३

[ दक्षिणामुखः, सिताम्बरधरः, हयवाहनः, स्रुक्ध्वजो इत्येते अधिकाः ]

### ४.२८.२२१ आलयबाह्ये अर्चनीयस्य क्षत्तुः लक्षणम्

**क्रि. ५ . १३७, १३८**

क्षत्ता पद्मनिभश्चैव वाणीनाथस्सिताम्बरः।
कुशध्वजश्चक्रहेतिस्सावाद्राणकवाहनः।।

श्रावणे श्रवणोद्भूतो द्विभुजः पूज्य उत्तरे।

**वि. २० . ११३**

[ मृगवाहनः महिषध्वजः दण्डपाणिः वेदरवः मूलाजः इत्यधिकम्। ]

### ४.२८.२२२ आलयबाह्ये अर्चनीयस्य मित्रस्य लक्षणम्

**क्रि. ५ . १३४ - १३६**

मित्रो बहुप्रजानाथो शरभाण्डनिभस्तथा।।

कपोतवाहनश्चैव मेघनादरवस्तथा।
द्विभुजो रक्तवर्णश्च यूपकेतुर्हलायुधः।।

ज्येष्ठाजो मासि वैशाखे धामपालस्तु पश्चिमे।
एष पङ्क्तीशनामा हि भित्तावभिमुखोऽर्चयेत्।।

**वि. २० . ११३**

[ अत्र पश्चिमाभिमुखः पुष्पाम्बरधरः, धूमकेतुः, ज्वालायुधः इति विशेषः। ]

### ४.२८.२२३ द्वारपालबेराणामाभिमुख्यम्

**क्रि. ५ . ९१**

द्वारपालाः प्रकर्तव्याः किञ्चित् द्वारनिरीक्षकाः।

### ४.२८.२२४ प्रथमद्वारपालस्य मणिकस्य लक्षणम्

**वि. २० . ११३**

प्रथमद्वारदक्षिणे श्वेतवर्णः शुक्लाम्बरधरः स्रुक्ध्वजो गजवाहनो रोहिणी-
जस्सन्ध्यानाथश्शङ्खरवो यन्त्रिकायुधः।

**स. २१ . १६**

[ अत्र जलदप्रभ इति विशेषः । ]

### ४.२८.२२५ प्रथमद्वारपालस्य मणिकस्य लक्षणम्

**क्रि. ५ . १२३ - १२५**

मणिकं रक्तवर्णं च शुकपत्राम्बरं तथा।।

उपवीताजिनोद्दीप्तं पिङ्गलाक्षं जटाधरम्।
हृदयेऽञ्जलिसंयुक्तं सन्ध्यानाथं स्रुवध्वजम्।।

स्थितं द्वारं समीक्ष्यैव द्वारनिर्गमदक्षिणे।
चैत्रे मासे च रोहिण्यां जातं द्विभुजमर्चयेत्।

### ४.२८.२२६ प्रथमद्वारवामपार्श्वे अर्चनीयायाः सन्ध्याख्याया मणिकपत्न्याः लक्षणम्

**वि. २० . ११३**

वामे तस्य पत्नी[1] कनकाभा सिताम्बरधरा पुष्पहस्ता सौम्यजा शुकस्वररवा सकारबीजा सन्ध्या।

**स. २१ . १७**

**क्रि. ५ . १२६**

वामे सन्ध्यां च हेमाभां हृदयेञ्जलिसंयुताम्।
सौम्यजां श्रावणे मासि द्विभुजां कुसुमाम्बराम्।।

### ४.२८.२२७ शातातपस्य द्वितीयद्वारपालस्य लक्षणम्

**क्रि. ५. १२७, १२८**

तस्य द्वितीयद्वारस्य बहिः पार्श्वे च दक्षिणे।
शातातपं[2] च दिव्येशं कुशध्वजमृषीश्वरम्।।

---

1 मणिकस्येत्यर्थः। 2 प्रकरणात् विशेषणसाम्याच्चायं शातातपः विखनाः इत्यध्यवसीयते।

चैत्रे तु रोहिणीजातं जटामौलिं चतुर्भुजम्।
स्फटिकाभं नीलवस्त्रं रुरुवाहनमर्चयेत्।।

**वि. २० . ११३, ११४**

[ अत्र हेमाम्बरधरः दण्डधरः, चतुर्भुजः, वेदरवः इति चाधिकम्। ]

## ४.२८.२२८ तापसाख्यस्य द्वितीयद्वारपालस्य लक्षणम्

**क्रि. ५ . १२९**

तापसं वामपार्श्वे तु श्यामाभं रुरुवाहनम्।
फाल्गुने पुष्यजं कूर्चध्वजं सन्धीशमर्चयेत्।।

**वि. २० . ११४**

[ वेदरवः दण्डधर द्विभुज इति चाधिकम्। ]

**स. २१ . १७, १८**

द्वितीयं[1] द्वारपालं च दक्षिणे तापसं स्थितम्।।
वामे तु सिद्धिदं पीतं कुर्याद् द्वौ द्वारपालकौ।
अथवा शङ्खचक्रौ तौ द्वितीयद्वारपालकौ।।

## ४.२८.२२९ प्रथमावरणद्वारदेवस्य किष्किन्धस्य लक्षणम्

**वि. २० . ११४**

प्रथमावरणद्वारदक्षिणे अग्निवर्णः शुक्लां(कां) बरधरः कूर्मवाहनः शरध्वजः सम्मोदिनीपतिः (ध्रुवा)द्यक्षरबीजः प्रोष्ठपाज्जातो दण्डपाणिः सिंहरवः किष्किन्धः।

**स.२१. ३०**

1 मुखमण्टपद्वारपालावेव अत्र द्वितीयद्वारपालौ इति व्यवहृतौ। तृतीयद्वारं प्रथमावरणद्वारशब्देन विमानार्चनाकल्पे व्यवहृतम्।

**४.२८.२३० प्रथमावरणद्वारपालस्य तीर्थस्य लक्षणम्**

**वि. २० . ११४**

वामे श्वेताभो रक्ताम्बरधरः कूर्मवाहनः शरध्वजो विशोकापतिः वेणुर्दण्डायुधस्तीर्थाद्यक्षरबीजो आर्द्राजो मेघरवस्तीर्थः।

**स. २१ . ३१**

[ अत्र अग्निवर्ण इत्यधिकतया दृश्यते। ]

**४.२८.२३१ द्वितीयावरणद्वारपालस्य वक्रतुण्डस्य लक्षणम्**

**वि. २० . ११४**

द्वितीयावरणद्वारदक्षिणे चोऽत्तराभिमुखः प्रवालाभः एकदन्तः कण्ठादूर्ध्वं गजाकारो वामनः कुंशध्वजो वेणुकङ्कतवाहनः शङ्खरवः चतुर्भुजः कदलीफलहस्तः आर्द्रापतिः श्रविष्ठाजो वक्रतुण्डः।

**क्रि. ५ . १७०, १७१**

**खि. १५ . ६५ - ६९**

वक्रतुण्डं तथा कुर्याद् बाह्यगोपुरदक्षिणे।।

एकदन्तयुतं कुर्याद् गजस्येव मुखं चरेत्।
कण्ठादूर्ध्वं गजाकारं बालमौलिसमन्वितम्।

भूतार्धवामनाकारं प्रवालाभं चतुर्भुजम्।
दक्षिणं साङ्कुशं वामं वज्रमुष्टिधरं परम्।

गजसाम्रफलोपेतं कदलीफलकाङ्क्षिणम्।
इक्ष्वेकहस्तं कुर्वीत सर्पैश्च परिवेष्टितम्।।

सव्यैकाननमव्यग्रमर्धसाचीकृतेक्षणम्।
वामे चाम्रफलोपेतं सप्तभिर्वाथ पञ्चभिः।।

## ४.२८.२३२ द्वितीयावरणद्वारपालस्य नागराजस्य लक्षणम्

### वि. २० . ११४, ११५

उत्तरे शङ्खवर्णो नीलाम्बरधरः किरीटी सिंहासने समासीनः द्विभुजो जवनीपतिः सार्पजो हस्ततालरवः शेषाद्यक्षरबीजः सागरध्वजवाहनो नवभिः सप्तभिः पञ्चभिर्वा पृष्ठोद्गतैः फणैः समाच्छादितमौलिः नागराजः।

## ४.२८.२३३ परिवारदेवस्य अनन्तस्य लक्षणम्

### क्रि. ५. १७१, १७२

दक्षिणे गोपुराद् बाह्ये वामेऽनन्तस्सितप्रभः।

आश्लेषाजश्च वैशाखे द्विबाहुश्च सुरापतिः।
फणामण्डलमध्यस्थः प्राञ्जलिर्भुजगाधिपः।।

### खि. १५. ७० - ७४

द्वारस्य वामभागे च अनन्तं परिकल्पयेत्।
सुवर्णवर्णं तं शेषं शङ्खक्षीरनिभन्तु वा ।।

आनीलाम्बरसंवीतं सर्वाभरणसंयुतम्।
एकजानुसमासक्तमूर्ध्वे मकुटसंयुतम्।।

सिंहासने वा कुर्वीत तथा पद्मासनेऽपि वा।
द्विभुजं नागराजन्तु रक्तनेत्रास्यपाणिकम्।।

सुरया सहितं देवमप्सरोभिस्तथैव च ।
फणन्तु मध्यमं तस्य भवेत्पञ्चाङ्गुलायतम्।।
अष्टाङ्गुलसमुत्सेधं फणानामानुपूर्व्यतः।

### ४.२८.२३४ परिवारदेवयोः वक्रतुण्डनागराजयोः लक्षणम्

**स. २१ .३०, ३२ ; ३४**

तत्रैव वक्रतुण्डं च प्रवालाभं तथैव च ।
नागराजं सुवर्णाभं तत्पार्श्वे चैव कारयेत्।।

श्वेताभं नीलवस्त्रं च कारयेदिति केचन।
अथवा वक्रतुण्डं च नागराजं तथैव च ।।

तृतीयावरणे द्वारपालकौ तौ च कारयेत्।

### ४.२८.२३५ तृतीयावरणद्वारदेवस्य शङ्खनिधेर्लक्षणम्

**वि. २० . ११५**

तृतीयावरणे द्वारदक्षिणे शङ्खाभो नीलाम्बरधरो भूताकारः शुद्धापतिः पद्मध्वजवाहनो हस्ताभ्यां शङ्खं दधानो वारुणः शङ्खादिबीजः-शङ्खरवः शङ्खनिधिः।

### ४.२८.२३६ तृतीयावरणद्वारदेवस्य पद्मनिधेर्लक्षणम्

**वि. २० . ११५**

वामे रक्ताभो जपाम्बरधरो विशुद्धेशो हस्ताभ्यां पद्मं दधानः पद्मध्वजवाहनः प्रोष्ठपाज्जातः सिंहनादरवः पद्माद्यक्षरबीजः पद्मनिधिः।

### ४.२८.२३७ चतुर्थावरणद्वारदेवस्य तुहिनस्य लक्षणम्

**वि. २० . ११५**

चतुर्थावरणे द्वारदक्षिणे रक्ताभः श्वेताम्बरधरो नागचूलिकमस्तकः उद्देश्यकरो भामिनीशस्तुरगवाहनोऽहिध्वजो भेरीरवस्तुकारबीजो हस्तजस्तुहिनः।

### ४.२८.२३८ चतुर्थावरणद्वारपालस्य बलिन्दस्य लक्षणम्

**वि. २० . ११५**

वामे श्यामाभो रक्ताम्बरधरो नागचूलिकमस्तक उद्देश्यकरस्सुधापतिः व्याघ्रवाहनस्सर्पध्वजो झल्लरीरवो हस्तजो बल्यादिबीजो बलिन्दः।

### ४.२८.२३९ पञ्चमावरणद्वारपालस्य नन्दकस्य लक्षणम्

**वि. २० . ११६**

पञ्चमावरणे द्वारदक्षिणे रक्ताभो नीलाम्बरधरः शिरसि खड्गधरो वायुवाहन अनलध्वजो घोररवः स्वातीजो बलेशः खकारबीजो नन्दकः।

### ४.२८.२४० पञ्चमावरणद्वारपालस्य शाङ्र्गस्य लक्षणम्

**वि. २० . ११६**

वामे पञ्चवर्णैर्युक्तं श्वेताम्बरधरं नपुंसकं शिरसि चापधरं मेघवाहनं शरध्वजं महानादरवं विशाखाजं शकारबीजं शाङ्र्गम्।

### ४.२८.२४१ षष्ठावरणद्वारपालस्य शङ्खचूलिनो लक्षणम्

**वि. २०. ११६**

षष्ठावरणे द्वारदक्षिणे श्वेताभो नीलवासाश्शिरसि शङ्खभृत् दण्डायुधो नन्देशो रोहिणीजो वियद्गतिध्वजो हंसवाहनः कण्ठशब्दरवो नामाद्यक्षरबीजः शङ्खचूली।

**स. २१ . ३५**

[ नराकार इति विशेषः ]

### ४.२८.२४२ षष्ठावरणद्वारपालस्य चक्रचूलिनो लक्षणम्

**वि. २० . ११६**

वामे रक्ताभः श्वेताम्बरधरः शिरसि चक्रधरः पाशदण्डभृन्मेघनादरवो धूमकेतुस्तुष्टीशः प्रवृत्तवाहनश्चकारबीजश्चक्रचूली।

**स २१ . ३४**

### ४.२८.२४३ सप्तमावरणद्वारपालस्य चण्डस्य लक्षणम्

**वि. २०. ११६, ११७**

सप्तमावरणे द्वारदक्षिणे हेमाभो रक्तवस्त्रधरः चतुर्भुजः उद्देश्यदण्डधर दक्षिणहस्तः अपसव्यकट्यवलम्बितवामहस्तः उग्रवेगसमन्वितो दंष्ट्राभ्यां युक्तः किञ्चिद्द्वारं समीक्ष्य स्थितः प्रियापतिः सिंहवाहनो मेघरवो धूमकेतुः मूलोद्भवो नामाद्यक्षरबीजः चण्डः।

### ४.२८.२४४ सप्तमावरणद्वारपालस्य प्रचण्डस्य लक्षणम्

**वि. २० . ११७**

वामे श्यामाभः श्वेताम्बरधरः सुमुखीपतिरन्यत्सर्वं चण्डवत् प्रचण्डः।



# २९.भक्तबेरकल्पनम्

## ४.२९.१ भक्तबेराणामुपादानद्रव्यम्

**य. २१. पृ. ९४**

शैलजं दारवं वाऽथ शूलं वा स्थावरे चरेत्।
जङ्गमे लोहजं चैव सौवर्णं राजतन्तु वा।।

**वा. ६**

सौवर्णं राजतं ताम्रं शैलजं तु विशेषतः।
सचित्रं वार्धचित्रं वा चित्राभासमथापि वा।।

**नि. ८**

## ४.२९.२ भक्तबेराणामवस्थानम्

**अ. १०**

सद्भावभावसंयुक्ताः स्थानका वा सुखासनाः।।

तत्तद्वाहनमारूढाः तत्तादायुधधारकाः।
तत्तदर्हसमायुक्ताः तत्तत्कर्मानुसारिणः।।

**य. २१ .पृ. ९४**

आसनं स्थानकं वाथ कारयेत्कर्तुरिच्छया।

## ४.२९.३ सामान्यतो भक्तबेराणां स्वरूपम्

**वा. ६**

केशबन्धादिबन्धं च केवलं कुन्तलं तु वा।
सर्वाभरणसंयुक्तं मुनिवेषमथापि वा।।

यथा सौन्दर्यसंयुक्तं सर्वावयवशोभितम्।
अञ्जलिं ध्यानमाविश्य तत्तदाकृतिमेव वा।
प्रभापीठं शिरश्चक्रं कारयेदिति केचन ।

**अ. १०**

त्रैवर्णिकानि पीताभा शूद्राः कृष्णनिभान्यमा (?)।
नानावस्त्रसमायुक्ताः ऊर्ध्वपुण्ड्रविराजिताः।
पद्ममालाभिराभूष्याः शङ्खचक्राङ्किकतास्तथा।

### ४.२९.४ ब्राह्मणभक्तबेरस्वरूपम्

**नि. ८**

ब्राह्मणं च शिखायुक्तं उपवीतसमायुतम्।
हृदयेञ्जलिसंयुक्तं द्विभुजं किञ्चिदानतम्।।

ईषदुन्मीलितं चैव ध्यानयुक्तं प्रकल्प्यते।
सुस्थितं दक्षिणं पादं वामपादं तु कुञ्चितम्।।

लब्धोच्चं प्रतिमायाश्च एकादशविधानतः।
बिम्बोच्चं पञ्चधा कृत्वा द्व्यंशं पीठोत्तमं भवेत्।।

समं वा विस्तृतं प्रोक्तं विस्ताराद्द्विगुणायतम्।
अङ्गुष्ठाग्रे विशेषेण तर्जन्यग्रं सुयोज्य च ।।

वामहस्तं हृदि न्यस्य ज्ञानभागेन दक्षिणम्।
अथवा वामहस्तं च वामं चोरौ प्रसार्य च ।।

दक्षिणं पूर्ववत्कृत्वा कल्पयेच्छान्तधीयुतम्।
ब्रह्मासनसमायुक्तं आसने वा विशेषतः।।

पीतवर्णसमायुक्तं श्वेतवस्त्रोत्तरीयकम्।
दिव्य (?) तालसमायुक्तं मौण्ड्यं वा ब्राह्मणस्य तु ।।

**क्रि .३४. ४०, ४१**

अतः परं प्रवक्ष्यामि भक्तानां स्थापने विधिम्।।
जटिनं शिखिनं वापि ब्राह्मणं परिकल्पयेत्।
प्राञ्जलिं भावनायुक्तं नासान्ताहितलोचनम्।।

**अ. १०**

[ अत्र जटिनमित्यस्य स्थाने मुण्डिनमिति दृश्यते। ]

**य. २१ .पृ. ९४**

ब्राह्मणं चेच्छिखायुक्तं हृदयेऽञ्जलिसंयुतम्।
द्विभुजं सुस्थितं प्रोक्तं किञ्चित्तत्वनिरीक्षणम् ।
बेरात्तुर्यांशकं पीठं वस्त्रयज्ञोपवीतिनम्।
कुर्यान्मनोहरं बेरमासने ब्राह्ममासनम्।

## ४.२९.५ क्षत्रियभक्तबेरस्वरूपम्

**अ. १०**

मकुटादिभूषणैः सर्वैरुपवीतादिभिर्यथा।
क्षत्रियो ज्ञानभावेन हृदयेऽञ्जलिसंस्थितम्।।

**क्रि. ३४. ४१,४२ ; नि. ८ य. २१ .पृ. ९४**

## ४.२९.६ वैश्यभक्तबेरस्वरूपम्

**अ. १०**

केशबन्धसमायुक्तं स्वकृताभरणैर्युतम्।
हृदयेऽञ्जलिसंयुक्तं वैश्यस्तथोपवीतिनः।।

**क्रि. ३४ . ४२ ; नि. ८**

### ४.२९.७ शूद्रभक्तबेरस्वरूपम्

**य. २१ .पृ. ९४**

---------- शूद्रान्मौण्ड्यांश्च कारयेत्।।

केशबन्धं च वा कुर्यात् यावन्नेत्रमनः प्रियम्।
कारयेद्वन्दमानांस्तान् --------------।

**नि. ८**

**अ. १०**

मौण्ड्यो वा केशबन्धो वा हृदयेऽञ्जलिसम्पुटम्।
विना यज्ञोपवीतं च शूद्रास्तद्विधान्यथा।।

### ४.२९.८ शूद्रादिभक्तबेरस्वरूपम्

**क्रि. ३४ . ४२, ४३**

कुर्याच्छूद्रानुलोमादीन् रोमचूडासमन्वितान्।।

अथवा मुण्डितान्वापि भगवद्ध्यानतत्परान्।
यदाकारेण देवेशं पश्येयुस्तत्तदाकृतीन्।।

### ४.२९.९ ब्राह्मणान्यभक्तबेराणां स्वरूपम्

**य. २१ .पृ. ९४ , ९५**

विनैव ब्राह्मणानन्यान्त्सायुधं पाणिमेव वा।
यजमानस्य यत्प्रीतिस्तथा कृत्वा सलक्षणम्।
ऊर्ध्वपुण्ड्रसमायुक्तं सदा सात्त्विकलक्षणम्।
पीतं रक्तं तथा कृष्णं सर्वेषां वर्णमुच्यते।
एवं लक्षणसंयुक्तं बुद्ध्या युक्त्या च कारयेत्।।

**नि. ८**

## ४.२९.१० भक्तबेराणां मानम्

**य.२१ पृ. ९४**

देवस्य बाहुमानं वा स्तनान्तं नाभिसीम वा ।
स्थावरं चेद्ध्रुवं प्रोक्तं जङ्गमं चोत्सवे चरेत्।
मात्राङ्गुलेन सप्तादिद्विद्व्यङ्गुलविवर्धनात्।
नवधा तस्य मानानि चान्यमानानि वा चरेत्।

**नि. ८**

**अ. १०**

ध्रुवस्य बाहुमानं स्यात् स्तनान्तं वार्धमानतः।
तथैवोत्सवबिम्बस्य मानं वाङ्गुलिमानया।
स्थावरं चेद् ध्रुवस्योक्तं जङ्गमं चोत्सवस्य च ।
कारयेत्प्रतिमामानं कर्तुश्चाप्यनुकूलकम्।

**क्रि. ३४. ४५**

भक्तानां ध्रुवबेरस्य देव्योश्चैव तथैव च ।।
प्रमाणं पूर्वमेवोक्तं ध्रुवबेरवशात्तथा।
कृत्वैवं भक्तबिम्बं तु---------।

**क्रि. ३४ .४५, ४६**

[ अत्र कौतुकस्य इत्यस्य स्थाने देव्योः इति दृश्यते। ]

## ४.२९.११ चातुर्वर्णिकभक्तबेराणां मानम्

**क्रि. ३४. ४४**

अष्टतालोक्तमानेन द्विजातीन् परिकल्पयेत्।।
मध्यमेनैव शूद्रादीन् कारयेत्तु यथाविधि।

**अ. १०**

अष्टतालेन सर्वेषां श्रेष्ठतालेषु भूसुराः।
नृपविण्मध्यमे नैव शूद्रादीनन्यमेव च ।।

**य. २१. पृ. ९४**

भक्तानां ब्राह्मणादीनां यजमानो विशेषतः।।

कर्तुमिच्छेत्तथा कर्ता मानं मानाङ्गुलेन वै।
मात्राङ्गुलेन वा कुर्यान्नाग (न्नव ?) तालक्रमेण वै।

### ४.२९.१२ मानुषभक्तबेरादि मानम्

**वा. ६**

आयादिषट्शुभं ज्ञात्वा यजमानशुभावहम्।
अष्टातलेन मानेन मानुषाणां तु कारयेत्।।



